# बृहत्-स्तोत्ररत्नावलि




खेमराज श्रीकृष्णदास प्रकाशन बम्बई

श्रीः

# बृहत्स्तोत्ररत्नावलिः



## प्रथमभागः १

## द्वाषष्ठि ( ६२ ) स्तोत्रात्मकः



मुद्रक एवं प्रकाशकः
खेमराज श्रीकृष्णदास,
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग, मुंबई - ४०० ००४.

## श्रीर्जयति



श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदांतप्रवर्तक श्रीमदनन्तसूरिसिंहासनस्थ श्रीरंगाचार्यस्वाम्यनुजश्रीवेंकटाचार्यस्वामिभिः कुरुक्षेत्रांतर्गतफतेपुरलब्धजनिविहारीवास्तव्याभिनवकृतविद्याचार्य महावनशास्त्रिभिश्च संशोधिता । अत एव श्रीमदनन्तनिगमान्तसिद्धान्त परमतत्त्वार्थानन्तकल्याणगुणाकर श्रीमन्नारायणस्वरूपस्वभावप्रकाशिकायां दर्शनस्पर्शनलेखनपाठनप्रदानादानरक्षणपूजनश्रवणादिभिः सकलभगवद्भक्तवैष्णवानां कलिकलुषान्धकारनिर्हरणप्रचण्ड भास्करद्युतौ श्रीमत्पूर्वाचार्यप्रणीतबृहत्स्तोत्ररत्नावल्यामध्येतृजनानां झटित्यखिलपुरुषार्थप्रदत्वेन वृत्तालंकारादिभिश्चात्यन्तसुन्दरोऽयं प्रथमोभागः सेतुशीताचलान्तर्धरणीमध्यवर्तिनामास्तिकमतावलम्बिसकलसज्जनानामत्यंतोपकाराय श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तकाचार्य कन्दाडकोयलेतिपीठस्थनारायणवाटिकासमृद्ध्यमानविभव श्रीमद्रामानुजाचार्याज्ञयातच्छिष्येण क्षेमराजश्रीकृष्णदासेनश्रीवेंकटेश्वराख्यमुद्रणयन्त्रालये पूर्वमुद्रणापेक्षया समीचीनमुद्रणं नीतः ।

---

# अथ बृहत्स्तोत्ररत्नावलिविषयानुक्रमणिका





इति विषयानुक्रमणिका समाप्ता



सव्यं पादं प्रसार्याश्रितदुरितहरं दक्षिणं कुञ्चयित्वा ।
जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय ॥
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शंखचक्रे ।
देवीभूपादिजुष्टो वितरतु जगतां शर्म वैकुण्ठनाथः ॥



तपस्ये मासि रोहिण्यां तटे सह्यभुवः स्थितम् ।
श्रीरङ्गशायिनं वन्दे सेवितं सर्वदेशिकः ॥



कन्याश्रवणसंजातं शेषाचलनिवासिनम् ।
सर्वेषां प्रथमाचार्यं श्रीनिवासमहं भजे ॥



मल्लीपुरवराधीशं माधवीकुसुमोद्भवम् ।
भूतं नमामि यद्विष्णोः ज्ञानदीपमकल्पयत् ॥



काञ्च्यां सरसि हेमाब्जे जातं कासारयोगिनम् ।
कलये यः श्रियः पत्युः ज्ञानदीपमकल्पयत् ॥



दृष्ट्वा तुष्टा तदा विष्णुं श्रीमयूरपुराधिपम् ।
कूपे रक्तोत्पले जातं महदाह्वयमाश्रये ॥



घुष्यते यस्य नगरे रङ्गयात्रा दिने दिने।
तमहं शिरसा वन्दे राजानं कुलशेखरम्॥



वृषभे तु विशाखायां कुरुकापुरिकारिजम् ।
पांड्यदेशे कलेरादौ शठारिं सैन्यपं भजे ॥

श्रीः

# स्तोत्ररत्नावली



## श्रीमते रामानुजाय नमः

श्रीरङ्गेशजयाश्रयकेतुः श्रितजनसंरक्षणजीवातुः ॥ भवभयजलधेरेष हि सेतुः पद्मानेतुः प्रणतौ हेतुः ॥ भज यतिराजं भज यतिराजं भज यतिराजं भवभीरो ॥१॥ आदौ जगदाधारः शेषस्तदनु सुमित्रानन्दनवेषः ॥ तदुपरिधृतहलमुसलविशेषस्तदनन्तरमभवद्गुरुरेषः ॥ भज यति० ॥२॥ भुंक्ते वैषयिकं सुखमन्यः प्रचकास्त्येवानश्नन्न्यः ॥ इति यस्तत्त्वं प्राह वदान्यस्तस्मादधिकः को नु वदान्यः ॥ भज यति० ॥३॥ नष्टे नयने कस्यालोकश्चित्ते मत्ते कस्य विवेकः ॥ क्षीणे पुण्ये कस्सुरलोकः कामे धूते कस्तव शोकः ॥ भज यति० ॥४॥ निशि वनितासुखनिद्रालोलः प्रातः परदूषणपटुशीलः ॥ अन्तर्याति निजायुष्कालः किं जानाति नरः पशुलीलः ॥ भज यति० ॥ ५ ॥ केचिल्लीलालालसगतयः केचिद्बालालालितरतयः ॥ केचिद्दोलायितहतमतयः केऽपि न सन्त्यर्चितयतिपतयः ॥ भज यति० ॥६॥ यावानबलो जरया देहस्तावान्प्रबलो विषये मोहः ॥ वचसि विरक्तिः

श्रुतिपरिवाहो मनसि हितस्त्वपरोऽपि विवाहः ॥ भज यति० ॥७॥ कलुषनिकायं ललनाकायं पश्यन्मुह्यसि सायं सायम् ॥ जहि जहि हेयं तद्व्यवसायं स्मर निरपायं चरमोपायम् ॥ भज यति० ॥८॥ रात्रिन्दिवमपि भिक्षाचर्या कलहायैवागच्छति भार्या ॥ मध्ये बान्धवसेवा कार्या कथय कदा तव देवसपर्या ॥ भज० ॥९॥ अन्धं नयनं भूमौ शयनं मन्दं वचनं मलिनं वदनम् ॥ तस्मिन्काले गोप्तुं सदनं वाञ्छसि दत्ततनूजाननम् ॥ भज० ॥१०॥ तालच्छदकृतकुब्जकुटीरः प्रतिगृहसन्ध्या कवलाहारः ॥ विविधपटच्चरभारकूरस्सोपि विधातृसमाहंकारः ॥ भज यति० ॥११॥ मन्त्रद्रव्यविशुद्धो यागस्सर्वारम्भविरागस्त्यागः ॥ कर्तुं शक्यो न कलौ योगः किं तु यतीशगुणामृतभोगः ॥ भज यति० ॥१२॥ उपरि महोपलवर्षासारो मार्गे कण्टककर्दमपूरः ॥ कक्षे भारश्शिरसि किशोरस्सुखयति घोरः कं संसार ॥ भज यति० ॥ १३ ॥ भजसि वृथा विषयेषु दुराशां विविधविचित्रमनोरथपाशाम् ॥ कियदपि लभसे न हि तत्रैकं किन्तु व्रजसि महान्तं शोकम् ॥ भज यति० ॥१४॥ कश्चन लोके करपुटपात्रः पातुं सुतमाश्रितमठसत्रः ॥ तस्मिन्वृद्धे तं सकलत्रः शपति हि रण्डासुत इति पुत्रः ॥ भज यति० ॥१५॥ मनुजपतिं वा दिग

धिपतिं वा जलजभवं वा जगदधिकं वा ॥ ममताहंकृ-
तिमिलिनो लोको निन्दति निन्दति निन्दत्येव ॥ भज
यति० ॥१६॥ पापहतो वा पुण्ययुतो वा सुरनरतिर्य-
ग्जातिभवो वा ॥ रामानुजपदतीर्थान्मुक्तिं विन्दति
विन्दति विन्दत्येव ॥१७॥ गुणगुणिनोर्भेदः किल नित्य-
श्चिदचिद्द्वयपरभेदस्सत्यः ॥ तद्द्वयदेहो हरिरिति तत्त्वं
पश्य विशिष्टाद्वैतं तत्त्वम् ॥ भज यति० ॥१८॥ यति-
पतिपदजलकणिकासेकश्चतुरक्षरपदयुग्मविवेकः ॥ यस्य
तु सालनगर्यवलोकस्तस्य पदेन हतो यमलोकः ॥ भज
यति० ॥१९॥ चिन्तय सर्वं चिदचिद्रूपं तनुरिति यस्य
हरेरनुरूपम् ॥ कस्मात्तस्मिन्कलयसि कोपं पश्चाद्व्रजसि
दुरापं तापम् ॥ भज यति० ॥२०॥ यश्चतुरक्षरमन्त्रर-
हस्यं वेद तमेव वृणीहि सदस्यम् ॥ तच्चरणद्वयदास्यमु-
पास्यं तद्विपरीतं मतमपहास्यम् ॥ भज यति० ॥२१॥
वैष्णवकुलगुणदूषणचिन्तां मा कुरु निजकुलशीला-
हन्ताम् ॥ यतिपतिरेव हि गुरुरेतेषामिति जानीहि महत्त्वं
तेषाम् ॥ भज यति० ॥ २२ ॥ विद्यानिपुणा वयमि-
त्यन्ये हृद्या धनिनो वयमित्यन्ये ॥ सत्कुलजातावय मि-
त्यन्ये तेषु कलिं परिपूर्णं मन्ये ॥ भज यति० ॥२३॥
यमकिङ्करकरमूले शूले पतदभियाति हि फाले फाले ॥
दहति तनुं प्रतिकूले काले कं रमयसि तत्काले बाले ॥

भज यति० ॥२४॥ सुमसकुमारं शोभितमारं रतिसुखसारं युवतिशरीरम् ॥ गतजीवितमतिघोरविकारं दृष्ट्वा गच्छसि दूरं दूरम् ॥ भज यति० ॥२५॥ नरवाहनगजतुरगारूढा नारीसुतपोषणगुणगूढाः ॥ नानारञ्जकविद्याप्रौढा नागरिकाः किं यतयो मूढाः॥ भज यति० ॥ २६ ॥ यस्य मुखस्था यतिपतिसूक्तिस्तस्य करस्था विलसति मुक्तिः॥ नरके पतितं नवनवयुक्तिर्नहि रक्षति सामान्यनिरुक्तिः ॥ भज यति० ॥ २७ ॥ श्रुतिशिरसामत्यन्तविदूष्यं सूत्रानभिमतमतिवैदुश्यम् ॥ प्रथमं मङ्गलमनृतविशेष्यं प्रलपसि किं प्राकृतकृतभाष्यम्॥ भज यति० ॥ २८ ॥ तस्करजारविदूषकधूर्ता मस्करिमौनिदिगम्बरवृत्ताः ॥ गुप्तघनीकृतधनमदमत्ता गुरवः किं परवञ्चकचित्ताः॥ भज यति० ॥२९॥ कान्तिमतीसुकुमारकुमारं केशवसिंहकिशोरमुदारम्॥ रामानुजमहिराडवतारं मूकान्धानपि मोक्षयितारम्॥ भज यति० ॥३०॥ काषायाम्बरकवचितगात्रं कलितमकण्डलुदण्डमवित्रम्॥ विधृतशिखाहरिणाजिनसूत्रं व्याख्यातद्वैपायनसूत्रम् ॥ भज यति० ॥३१॥ यामुनपूर्णकृपोज्ज्वलगात्रं रामाब्जाक्षमुनीक्षणपात्रम् ॥ कोमलशठरिपुपदयुगमात्रं श्रीमाधवसेनापतिमित्रम् ॥ भज यति० ॥३२॥ सालग्रामे सर्वहितार्थं येनास्थापि गुरोः पदती-

र्थम्॥तत्कुलदैवतहितपुरुषार्थं सकलोपायाधिकचरमा-
र्थम् ॥ भज यति० ॥ ३३ ॥ प्रवचनशक्तःप्रज्ञायुक्तः
परहितशक्तः परमविरक्तः ॥ नानादैवतभक्त्या युक्तो न
भवति मुक्तो भवति न मुक्तः ॥ भजयति० ॥३४॥ सन्त्यज
सकलमुपायाचरणं व्रज रामानुजचरणौ शरणम् ॥
पश्यसि तमसः पारं नित्यं सत्यं सत्यं पुनरपि सत्यम्
भज यति० ॥ ३५ भगवद्रामानुजषट्त्रिंशत्सालग्रामगुरू-
त्तमवंश्यः ॥कौण्डिन्यः कविराह पवित्रं रङ्गार्यो यति-
राजस्तोत्रम्॥ भजयतिराजं भज यतिराजं भज यतिराजं
भवभीरो ॥३६॥ इति यति राजस्तोत्रं समाप्तम् ॥१॥

## अथ यतिराजस्तोत्रम् २

धनं यस्य सद्ब्रह्म विद्यानिदानं बुधानन्दरूपं स्वरूपं
दधानम्॥ परप्रापकाङ्घ्रिद्वयीसन्निधानं विधानं विभूति-
द्वयेशाभिधानम् ॥ भजे भाष्यकारं भजे लक्ष्मणार्यं
भजे सालसद्ग्रामरामानुजार्यम् ॥ १ ॥ नमोनित्यदिव्य-
प्रबन्धादिकृद्भ्यो नमः पञ्चरात्रादिविद्भ्यो मुनिभ्यः ॥
नमोमद्गुरुभ्योनमस्तद्गुरुभ्योनमः पञ्चसंस्कारविद्या-
गुरुभ्यः ॥ भजे भाष्य० ॥२॥ नमो वेङ्कटाधीशसत्पाद-
रेणुस्तवैः पद्यविद्यासहस्रप्रयोक्त्रे ॥ मुमुक्षूञ्जनान्नित्यक-
ल्पान्विधात्रे महाहोबलाचार्यवर्याय पित्रे ॥ भजे
भाष्य० ॥ ३ ॥अहिर्बुध्न्यइत्यादि यस्मिन्प्रमाणं कलौ

कश्चिदित्यादिशुद्धं पुराणम् ॥ मृषा घोषवादादि येनाधरीणं धुरीणं गुरूणां पुमांसं पुराणम् ॥ भजे भाष्य० ॥४॥ यतीशाश्रितानां कनिष्ठो भवेयं सदा पञ्चमोपायनिष्ठो भवेयम् ॥ गुरोरङ्घ्रिरूपो भवेयं भवेयं हरेरन्तरङ्गो भवेयं भवेयम् ॥ भजे भाष्य० ॥५॥ अनन्तो हि भूत्वा महाभाष्यकारः प्रबुद्धं चकार त्रयीशब्दजालम् ॥ पुनस्सोऽयमागत्य मद्भाष्यकारः प्रबुद्धं चकार श्रुतेरर्थमूलम् ॥ भजे भाष्य० ॥६॥ मृषावादिदुर्वादपंके निमग्नं गुणाभावहेयस्वरूपादिभग्नम् ॥ परं ब्रह्म यस्य प्रभावेण लग्नं बभौ दृष्टकल्याणलक्ष्मीवलग्नम् ॥ भजे भाष्य० ॥७॥ सदैकान्तिभिर्द्वादशोद्यत्सहस्रैश्चतुस्सप्ततिस्वीयसिंहासनस्थैः ॥ तथाविष्णुभक्तैरनन्तैरुपेतंमहारङ्गराजाङ्गरक्षाविनीतम् ॥ भजे भाष्य० ॥८॥ न यागो न योगो न वा तन्त्रमन्त्रौ न हि ज्ञानदाने न भक्तिप्रपत्ती ॥ तथाप्यात्मलब्धौ न सन्देहगन्धो बलम्मे महद्भाष्यकारानुबन्धः ॥ भजे भाष्य० ॥९॥ कृतं वा तपो न्यद्बलं वा गुरूणां श्रियः श्रीपतेः किन्तु साक्षादपेक्षा ॥ घृणा भाष्यकारस्य निष्कारणा वा ममैषा मुखे घोषते कापि भाषा ॥ भजे भाष्य० ॥ १० ॥ परव्यूहलीलान्तरार्चाविशेषैरशेषैर्हरिर्व्यासमन्वादिवेषैः ॥ समुद्धर्तुमेतन्भवाब्धेरशक्तस्ततोभूद्यतिः शेषभावानुषक्तः ॥ भजे भाष्यका० ॥ ११ ॥ भवाब्धौ

निमग्नान्त्समुद्धर्तुंकामः परो लक्ष्मणार्याद्गुरुर्नेति नेति॥ सनिस्साणभेरीमहाकाहलीभिर्भटैर्घुष्यतां घुष्यतां दिक्तटेषु ॥ भजे भाष्य० ॥ १२ ॥ सती ब्रह्मविद्या सुतः शैलदीपो गुरुः परिजातः श्रितं भाग्यरत्नम् ॥ ततः कालमेघे स्वयं भोगिराजे प्रसन्ने तदस्मिन्नलभ्यं कुतो नः भजे भाष्य० ॥ १३॥ तृणीकृत्यवैरिञ्चिरुद्रप्रतिष्ठां यदीयाङ्घ्रिपाथोजकैङ्कर्यनिष्ठाम् ॥ इहामुत्र च प्राभवाः प्रक्रमन्ते तदन्यं गुरुं मूढभावा भजन्ते ॥ भजे भाष्य ॥ १४॥ यतीन्द्रं विनिन्दत्यसद्ग्रंथकंथाधराविश्वमिथ्यानुसन्धानगन्धाः ॥ जगच्चक्षुषं प्रत्नमेकं शतान्धानपश्यन्त्यहो कर्मबन्धादिवान्धाः ॥ भजे भाष्य० ॥१५॥ न तर्केऽप्युदर्को न शब्दे च शक्तो न कस्यावतारो न तन्त्रस्वतन्त्रः ॥ कथं कल्पयेत्सर्वभाषासु गाथाः किमाचार्यमाहात्म्यभीतस्स वेधाः ॥ भजे भाष्य० ॥१६॥ अहं तूर्ध्वबाहुर्भणामि शृणुध्वं शठारातिनाथादिवाचः स्मरध्वम् ॥ यतीन्द्राङ्घ्रिकैङ्कर्यमात्रे यतध्वं मनुध्वं मुरध्वंसिलोके रमध्वम् ॥ भजे भा० ॥ १७ ॥ सुधापुण्ड्ररेखाविराजल्ललाटं सुधांशुप्रतीकाशकाशत्किरीटम् ॥ समुद्घाट्य वैकुंठकक्ष्याकवाटं सुपर्णादिसंसेव्यमानंदकूटम् न भजे भाष्य० ॥१८॥ उषस्सांध्यरागारुणन्मेघरेखाकचाकार्षिकाषायखण्डोत्तरीयम् ॥ बृहन्नारदीयोक्तरूपं तुरीयं

परं वस्तु पश्यामि लक्ष्मीधरीयम् ॥ भजे भाष्यका० ॥१९॥ अलं देशिकैरन्यचित्तैः प्रमत्तैरलंस्थाणुकल्पैरलक्ष्मीशतल्पैः ॥ अपद्माक्षहारैरचक्रांकधारैरसद्भाष्यकारैरशेषावतारैः ॥ भजे भाष्य० ॥२०॥ प्रफुल्लाब्जनेत्रं प्रभाशोभिगात्रं प्रकृत्या पवित्रं प्रभावैर्विचित्रम् ॥ हरेरातपत्रं सतां जैतपत्रं सुपर्णस्यमित्रं सुमित्रासुपुत्रम्॥ भजे भाष्य० ॥२१॥ अहो शांकराः किंकरत्वं प्रयाताः वरे भास्करास्तस्कराकारभाजः ततो यादवाः पादवारिप्रपूतास्तथैवागतास्सौगता भाट्टसांख्याः ॥ भजे भाष्य० ॥२२॥ शठः कापिलः कोऽपि लक्ष्यो न मोक्षे विनष्टस्वरोऽभूत्स माहेश्वरोऽपि॥कणादः प्रमाणप्रणादोऽपि शान्तः प्रमाणं ब्रुवाणश्च गाणापतेयः ॥ भजे भाष्य० ॥२३॥ स्वयंब्रह्मसूत्राद्यभावेऽपि बुद्ध्या कथं ब्रह्मसूत्रादिभाष्यं विदध्यात् ॥ कथं तस्य शिष्या बभूवुर्मनुष्याः कुतो नास्ति रोषः कलेरेष दोषः ॥ भजे भाष्य० ॥२४॥ पुरादर्शितं चोलभृत्कीटकण्ठं समारुह्य सह्याचलेन्द्रोपकण्ठम् ॥ अकुंठप्रभावोऽत्र वैकुण्ठकल्पः सकंठीरवं प्राप्य सोल्लुण्ठमास्ते ॥ भजे भाष्य० ॥२५॥ नः पुण्यकौण्डिन्यगोत्रोद्भवेभ्यो नमस्सालसद्ग्रामसद्वंशजेभ्यः॥नमोवैष्णवेभ्यो महद्भ्योऽर्भकेभ्यो नमः शेषभावादचिद्भ्यश्च चिद्भ्यः ॥ भजे

भाष्य० ॥२६॥ इति श्रीसालग्रामस्थलाचार्यपुरुष-नरपतिराजसंस्थानगुरूद्दण्डवेदान्तरंगार्यविरचितं यति-राजस्तोत्रद्वयं सम्पूर्णम् ॥ २ ॥

## अथ रामानुजवैभवस्तोत्रम्

श्रीमन्नारायण स्वामिन् शठकोपं प्रदेहिमे॥रामानुजं प्रदेहि त्वं शठकोपं मुनीश्वर ॥ १ ॥ प्रदेहि मे दाशरथिं रामानुज दयानिधे ॥ भवाब्धौ मज्जमानं मां करुणाब्धे समुद्धर ॥२॥ त्वमेव मे पिताः माता शरण्यश्च गुरुर्गतिः ॥ त्वां विनाऽन्या गतिः स्वामिन्नहि कुत्रापि विद्यते ॥३॥ घोरे कलियुगे ह्यस्मिन्त्सर्वधर्मविवर्जिते॥ संसारतरणोपायो नान्यस्त्वच्चरणात्प्रभो॥४॥ततोऽनन्य गतिं दीनं दीनबन्धो दयार्णवः ॥ पाहि मां पापिनं घोरं रामानुजजगद्गुरो॥५॥संसारतापसन्दग्धश्शीतहेतुविवर्जितः ॥ रामानुजपदाम्भोजच्छायाविश्राममाश्रये ॥६॥ सर्वमंगलमांगल्यं सर्वोपद्रवनाशनम्॥वन्दे रामानुजार्यस्य नित्यं पादाम्बुजद्वयम् ॥७॥ केचित्कर्मादियोगेषु विद्वांसोभिरता जनाः॥वयंतु यतिराजस्य पादपद्मैकसंश्रयाः ॥ ८ ॥ भोगैश्वर्यपराः केचित्केचित्कैवल्यमीप्सवः ॥ वयन्तु शृङ्खलालग्ना रामानुज दयानिधे॥९॥ त्वत्पादाम्भोजमाश्रित्य निखिलोपायवर्जितः॥तरिष्यामोऽञ्जसा नूनं मृत्युसंसारसागरम्॥१०॥ नमोऽस्तु सर्वा-

र्तिविनाशहेतवे ह्यनंतपापेन्धनदावकीलिने ॥ निजाश्रि-
तानां भवसिंधुसेतवे यतींद्रपादाम्बुजकामधेनवे ॥११॥
अखिलदुरितपुञ्जध्वंसनंदेहभाजांभवजलनिधिपाते पाव
नं पावनानाम्॥ परमपुरुषधामप्रापकं स्वाश्रितानां यति-
पति पदपद्मं श्रेयसे संश्रयामि ॥१२॥ नमामि रामानु-
जपादपंकजं वदामि रामानुजनाम निर्मलम् ॥ स्मरामि
रामानुजदिव्यविग्रहं करोमि रामानुजदासदासताम्
॥ १३ ॥ रामानुजस्य पदपंकजमाश्रयामि रामानु-
जस्य करुणामनुसंदधामि ॥ रामानुजस्य जनपादरजो
वहामि रामानुजाय नम इत्यनिशं वदामि॥ १४॥बौद्धा-
न्धकारपरिहारदिवाकराय श्रीवैष्णवाम्बुनिधिपूर्णनिशा
कराय ॥ अद्वैतवादिकरियूथमृगाधिपाय तस्मै नमोस्तु
सततं यतिपुंगवाय ॥१५॥ लोकानुद्धर्त्तुकामो धृतमनु-
जवपुर्भूतले योऽवतीर्णो निर्जित्याशेषदुष्टान् कुमतिम-
तपरान्वैष्णवंकर्मतेने॥ब्रह्मेशानाद्यलभ्यंनिखिलपतिपदं
दत्तवांश्चाश्रितानां श्रीमान्रामानुजो नो भवभुजगमुखा-
त्पातु नित्यं दयालुः ॥ १६ ॥ स्वपदांबुजसंश्रितपाप-
हरं सकलश्रुतिसारयथार्थकरम् ॥ जयनादिविनाशनदंड
धरं प्रणमामि यतीश्वरमादिगुरुम् ॥ १७॥ प्रकटीकृतमा-
धवभक्तिपथं कलिपातकमोचनपुण्यकथम् ॥ परिभूतनि-
रीश्वरवादिमतं यतिराजगुरुं प्रणमामि सदा ॥ १८ ॥

कृमिकंठनरेशनिषूदकरंभवरोगविनाशनवैद्यवरम् ॥ शरणागतवत्सलवारिनिधिम्प्रणमामि सदा यतिभूमिपतिम् ॥ १९ ॥ नमो रामानुजार्याय कल्याणगुणसिन्धवे ॥ कृपामात्रप्रसन्नाय दीननिर्व्याजबन्धवे ॥ २० ॥प्रथमोनन्तरूपश्च द्वितीयो लक्ष्मणस्तथा ॥ तृतीयो बलरामश्च कलौ रामानुजो मुनिः ॥ २१ ॥ द्वापरान्ते कलेरादौ पाखण्डप्रचुरे जने ॥ रामानुजेति भविता विष्णुधर्मप्रवर्त्तकः ॥२२॥ सर्वलोक समुद्धर्त्रे कृमिकण्ठ विनाशिने॥ नारायणप्रतिष्ठात्रे प्रपन्नसुरसाक्षिणे ॥२३॥ त्रिदण्डहस्तं सितयज्ञसूत्रं काषायवस्त्रं लसदूर्ध्वपुंड्रम् ॥रथाङ्गशङ्खाङ्कितबाहुमूलं रामानुजार्यं शरणं प्रपद्ये ॥ २४ ॥ इति श्रीब्रह्मसंहितायां रामानुजवैभवस्तोत्रं संपूर्णम् ॥ ३ ॥

## रामानुजाष्टोत्तरशतनामावली

रामानुजः पुष्कराक्षो यतीन्द्रः करुणाकरः॥कान्तिमत्यात्मजः श्रीमाँल्लीलामानुषविग्रहः ॥१॥ सर्वशास्त्रार्थतत्त्वज्ञः सर्वज्ञः सज्जनप्रियः ॥ हारीतगोत्रतिलकः श्रीभूतपुरपालकः ॥२॥ अनघो भक्तमन्दारः केशवानन्दवर्धनः ॥ कांचीपूर्णप्रियसखः प्रणतार्तिविनाशकः ॥३॥ पुण्यसंकीर्तनः पुण्योब्रह्मराक्षसमोचकः॥ यादवापादितापार्थवृक्षच्छेदकुठारकः ॥४॥ अमोघो लक्ष्मण

मुनिः शारदाशोकनाशकः ॥ निरंतरजनाज्ञानविमोचनविचक्षणः ॥ ५ ॥ वेदांतद्वयसारज्ञो वरदांबुप्रदायकः ॥ पराभिप्रायतत्त्वज्ञो यामुनांगुलिमोचकः ॥६॥ देवराजकृपालब्धषड्वाक्यार्थमहोदधिः ॥ पूर्णार्यलब्धसन्मन्त्रः शौरिपादाब्जषट्पदः ॥ ७ ॥ त्रिदण्डधारी ब्रह्मज्ञो ब्रह्मध्यानपरायणः ॥ रंगेशकैङ्कर्यरतो विभूतिद्वयनायकः ॥८॥ गोष्ठीपूर्णकृपालब्धमंत्रराजप्रकाशकः ॥ वररंगानुकम्पात्तद्राविडाम्नायपारगः ॥९॥ मालाधरार्यसुज्ञाततद्राविडाम्नायतत्त्वधीः ॥ चतुस्सप्ततिशिष्याढ्यः पञ्चाचार्यपदाश्रयः ॥ १० ॥ प्रपीतविषतीर्थाम्भः प्रकटीकृतवैभवः ॥ प्रणतार्तिहराचार्यदत्तभिक्षैकभोजनः ॥ ११ ॥ पवित्रीकृतकूरेशभागिनेयत्रिदण्डकः ॥ कूरेशदासरथ्यादिचरमार्थप्रदायकः ॥१२॥ रङ्गेशवेङ्कटेशादिप्रकटीकृतवैभवः ॥ देवराजार्चनरतो मूकमुक्तिप्रदायकः ॥१३॥ यज्ञमूर्तिप्रतिष्ठाता मन्नाथो धरणीधरः ॥ वरदाचार्यसद्भक्तो यज्ञेशार्तिविनाशकः ॥१४॥ अनन्ताभीष्टफलदो विठ्ठलेशप्रपूजितः ॥ श्रीशैलपूर्णकरुणालब्धरामायणार्थकः ॥ १५ ॥ प्रपत्तिधर्मैकरतो गोविंदार्यप्रियानुजः ॥ व्याससूत्रार्थतत्त्वज्ञो बोधायनमतानुगः ॥ १६ ॥ श्रीभाष्यादिमहाग्रन्थकारकः कलिनाशनः ॥ अद्वैतमतविच्छेत्ता विशिष्टाद्वैतपारगः ॥ १७ ॥ कुरंगनगरीपूर्ण-

मन्त्ररत्नोपदेशकः ॥ विनाशिताखिलमतश्शेषीकृतरमापतिः ॥१८॥ पुत्रीकृतशठारातिश्शठजिदृणमोचकः ॥ भाषादत्तहयग्रीवो भाष्यकारो महायशाः ॥१९॥ पवित्रीकृतभूभागः कूर्मनाथप्रकाशकः ॥ श्रीवेङ्कटाचलाधीशशङ्खचक्रप्रदायकः ॥२०॥ श्रीवेङ्कटेशश्वशुरः श्रीरमासखदेशिकः ॥ कृपामात्रप्रसन्नार्यो गोपिकामोक्षदायकः ॥ २१ ॥ समीचीनार्यसच्छिष्यसत्कृतो वैष्णवप्रियः । कृमिकण्ठनृपध्वंसी सर्वमन्त्रमहोदधिः ॥२२॥ अङ्गीकृतान्ध्रपूर्णार्यस्सालग्रामप्रतिष्ठितः ॥श्रीभक्तग्रामपूर्णाढ्यविष्णुवर्धनरक्षकः ॥२३॥बौद्धध्वान्तसहस्रांशुःशेषरूपप्रदर्शकः॥नगरीकृतवेदाद्रिर्ढिल्लीश्वरसमर्थितः॥२४॥ नारायणप्रतिष्ठाता संपत्पुत्रविमोचकः ॥संपत्कुमारजनकः साधुलोकशिखामणिः॥२५॥सुप्रतिष्ठितगोविन्दराजः पूर्णमनोरथः॥गोदाग्रजो दिग्विजेता गोदाभीष्टप्रपूरकः ॥२६॥ सर्वसंशयविच्छेत्ता विष्णुलोकप्रदायकः॥ अव्याहतमहद्धर्मा यतिराजो जगद्गुरुः ॥ २७ ॥ एवं रामानुजार्यस्य नाम्नामष्टोत्तरं शतम् ॥ यः पठेच्छृणुयाद्वापि सर्वान्कामान्समश्नुते ॥ २८ ॥ यदान्ध्रपूर्णेन महात्मनेदं स्तोत्रं कृतं सर्वजनावनाय ॥ तज्जीवभूतं भुवि वैष्णवानां बभूव रामानुजमात्तसानाम् ॥ २९ ॥

इति श्रीमद्रामानुजाष्टोत्तरशतनामावलिः संपूर्णा ॥४॥

## अथ पञ्चधाटी

पाषण्डद्रुमषण्डदावदहनश्चार्वाकशैलाशनिर्बौद्धध्वान्तनिरासवासरपतिर्जैनेभकण्ठीरवः ॥ मायावादिभुजङ्गभंगगरुडस्त्रैविद्यचूडामणिः श्रीरङ्गेशजयध्वजो विजयते रामानुजोऽयं मुनिः ॥१॥ पाषण्डषण्डगिरिखण्डनवज्रदण्डाःप्रच्छन्नबौद्धमकरालयमन्थदण्डाःवेदार्थसारसुखदर्शनदीपदण्डा रामानुजस्य विलसन्ति मुनेस्त्रिदण्डाः ॥२॥ चारित्रोद्धारदण्डंचतुरनयपथालंक्रियाकेतुदण्डं सद्विद्यादीपदण्डंसकलकलिकथासंहृतेः कालदण्डम्॥त्रय्यंतालम्बदण्डंत्रिभुवनविजयच्छत्रसौवर्णदण्डं धत्ते रामानुजार्यःप्रतिकथकशिरोवज्रदण्डं त्रिदंडम्॥३॥ त्रय्या माङ्गल्यसूत्रं त्रियुगयुगपथारोहणालम्बसूत्रं सद्विद्यादीपसूत्रंसगुणनयकथासंपदां हारसूत्रम् ॥ प्रज्ञासूत्रं बुधानां प्रशमधनमनःपद्मिनीनालसूत्रं रक्षासूत्रं यतीनां जयति यतिपतेर्वक्षसि ब्रह्मसूत्रम् ॥ ४ ॥ पाषण्डसागरमहावडवामुखाग्निःश्रीरङ्गराजचरणाम्बुजमूलदासः॥ श्रीविष्णुलोकमणिमण्डपमार्गदायी रामानुजो विजयते यतिराजराजः ॥५॥ इति श्रीपञ्चधाटी समाप्ता ॥ ५ ॥

## अथ रामानुजचतुःश्लोकी

अनिशं भजतामनन्यभाजां चरणाम्भोरुहमादरेण पुंसाम् ॥ वितरसि विविधां विभूतिनिष्ठां जय रामानुज

रंगधाम्नि नित्यम् ॥१॥ जयिनो विमतांस्त्वदीयसूक्ति कुशलीभूयकुदृष्टिभिस्समेतान् ॥ शकलीकुरुषे विपश्चिदोषान् जय रामानुज० ॥२॥ जय मायिमतांधकारभानो जय बाह्यप्रमुखाटवीकृशानो ॥ जयसंमतसिन्धुशीतभानो जय रा० ॥ ३ ॥ श्रुतिसम्मतसुप्रमाणतत्त्वं कृपयाऽऽलोच्य सुधासमानबुद्ध्या ॥ अकृथावितितैकभाष्यरत्नं जय० ॥४॥ इति रामानुजचतुः श्लोकी ॥६॥

## अथ रामानुजस्तोत्रम्

हे रामानुज हे यतिक्षितिपते हे भाष्यकार प्रभो हे लीलानरविग्रहानघ विभो हे कान्तिमत्यात्मज ॥ हे श्रीमन् प्रणतार्तिनाशन कृपामात्रप्रसन्नार्य भो हे वेदान्तयुगप्रवर्तक परं जानामि न त्वां विना ॥१॥ हे हारीतकुलारबिंदतरणे हे पुण्यसंकीर्तन ब्रह्मध्यानपर त्रिदंडधर हे भूतिद्वयाधीश्वर॥ हे रंगेश नियोजक त्वरित हे गीश्शोकसंहारक स्वामिन् हे वरदांबुदायक परं जानामि न त्वां विना ॥२॥ हे श्रीभूतपुरीश लक्ष्मण मुने हे यादवापादितापार्थार्थद्रुमकृन्तनोग्रपरशो हे भक्तमन्दारक ॥ हे ब्रह्मासुरमोचनक्षम कृपाकूपार हे सज्जनप्रेष्ठामोघयतीन्द्रदेशिक परं जानामि न त्वां विना ॥३॥ हे पूर्णार्य कृपात्तसद्द्वयमनो मालाधरानुग्रहात् ज्ञातद्राविडवेदतत्त्व सुमते मन्नाथ पृथ्वीधर ॥ कांचीपूर्णवरेण्यशिष्य भगवन्

हे केशवस्यात्मज श्रीपद्मेशपदाब्जषट्पदपरं जानामि न त्वां विना ॥ ४ ॥ हे गोपीजनमुक्तिदानकर हे शास्त्रार्थ तत्त्वज्ञ हे गोष्ठीपूर्णकृपागृहीतविलसन्मन्त्राधिपाहस्कर॥ हेऽनंतेष्टफलप्रदायक गुरो हे विठ्ठलेशार्चित हे बोधायन सूत्रसन्मत परं जानामि न त्वां विना ॥५॥ हे गोपालक हे कृपाजलनिधे हे सिंधुकन्यापते हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव हे रामानुज हे जगत्रयगुरो हे पुंडरीकाक्ष मां हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥६॥ हे राम २ पुरुषोत्तम २ नरहरे नारायण २ केशव २ गोविन्द २ गरुडध्वज २ गुणनिधे दामोदर २ माधव २ हे कृष्ण २ कमलापते यदुपते सीतापते श्रीपते हे वैकुंठपते चराचरपते लक्ष्मी पते पाहि माम् ॥ ७ ॥ इति श्रीरामानुजस्तोत्रं सम्पूर्णम् ॥ ७ ॥

## अथ नारायणाष्टकम्

वात्सल्यादभयप्रदानसमयादार्त्तार्तिनिर्वापणादौदार्य्यादघशोषणादगणितश्रेयः पदप्रापणात् ॥ सेव्यः श्रीपतिरेक एव जगतामेतेऽभवन्साक्षिणः प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्याध्रुवः ॥ १ ॥ प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय स्तंभे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः ॥ वक्षस्तस्य विदारयन्नि-

जनैर्वात्सल्यमापादयन्नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २ ॥ श्रीरामोऽत्र विभीषणोऽयमनघो रक्षोभयादागतः सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम् ॥ इत्युक्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवानार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥३॥ नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भोः सुरा रक्षन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः ॥ मा भैषीरिति तस्य नक्रहनने चक्रायुधः श्रीधरो ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥४॥ भोः कृष्णाच्युतः भोः कृपालय हरे भोः पाण्डवानां सखे क्वासि क्वासि सुयोधनाद्यपहृतां भो रक्ष मामातुराम् ॥ इत्युक्तोऽक्षयवस्त्रसंभृततनुर्योऽपालयद्द्रौपदीमार्त्तत्राणपरायणः स भगवान्नारा० ॥ ५ ॥ यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं यन्नामामृतपूरकं च पिबतां संसारसन्तारकम् ॥ पाषाणोऽपि यदङ्घ्रिपङ्करजसा शापान्मुनेर्मोचितो ह्यार्तत्राणपरा० ॥६॥ पित्रा भ्रातरमुत्तमासनगतं ह्यौत्तानपादिर्ध्रुवो दृष्ट्वा तत्सममारुरुक्षुरधिकं मात्राऽवमानं गतः ॥ यं गत्वा शरणं यदाप तपसा हेमाद्रिसिंहासनं ह्यार्तत्राणपरायण० ॥ ७ ॥ आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः ॥ संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥ ८ ॥ इति श्रीकूरेशस्वामिविरचितं नारायणाष्टकं सम्पूर्णम् ॥ ८ ॥

# अथ जगन्नाथपञ्चकम्

रक्ताम्भोरुहदर्पभञ्जनमहासौन्दर्यनेत्रद्वयं मुक्ताहार-विलम्बिहेममुकुटं रत्नोज्ज्वलत्कुण्डलम् ॥ वर्षामेघस-माननीलवपुषं ग्रैवेयहारान्वितं पार्श्वे चक्रधरं प्रसन्न-वदनं नीलाद्रिनाथं भजे ॥ १ ॥ फुल्लेन्दीवरलोचनं नवघनश्यामाभिरामाकृतिं विश्वेशं कमलाविलासवि-लसत्पादारविन्दद्वयम् ॥ दैत्यारिं सकलेन्दुमंडितमुखं चक्राब्जहस्तद्वयं वन्दे श्रीपुरुषोत्तमं प्रतिदिनं लक्ष्मी-निवासालयम् ॥२॥ उद्यन्नीरदनीलसुन्दरतनुं पूर्णेन्दु-बिम्बाननं राजीवोत्पलपत्रनेत्रयुगुलं कारुण्यवारांनि-धिम् ॥ भक्तानां सकलार्तिनाशनकरं चिन्तार्थि-चिन्तामणिं वंदे श्रीपुरुषोत्तमं प्रतिदिनं नीलाद्रिचूडा-मणिम् ॥३॥ नीलाद्रौ शंखमध्ये शतदलकमले रत्न-सिंहासनस्थं सर्वालंकारयुक्तं नवघनरुचिरं संयुतं चाग्रजेन। भद्राया वामभागे रथचरणयुतं ब्रह्मरुद्रेन्द्र-वंद्यं वेदानां सारमीशं सुजनपरिवृतं ब्रह्मदारुं स्मरामि ॥ ४ ॥ दोर्भ्यां शोभितलांगलं समुसलं कादम्बरी-चञ्चलं रत्नाढ्यं वरकुण्डलं भुजबलैराक्रांतभूमण्डलम् ॥ वज्राभामलचारुगण्डयुगलं नागेन्द्रचूडोज्ज्वलं संग्रामे चपलं शशांकधवलं श्रीकामपालं भजे ॥ ५ ॥ इति श्रीजगन्नाथपञ्चकं समाप्तम् ॥ ९ ॥

# अथालवन्दारस्तोत्रम्

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् ॥ स्तोत्रयामास योगींद्रस्तं वन्दे यामुनाह्वयम् ॥ १ ॥ नमो नमो यामुनाय यामुनाय नमो नमः ॥ नमो नमो यामुनाय यामुनाय नमो नमः ॥२॥ नमो यामुनपादाब्जरेणुभिः पावितात्मने ॥ विदिताखिलवेद्याय गुरुवे विदितात्मने ॥३॥ नमोऽचिंत्याद्भुताक्लिष्टज्ञानवैराग्यराशये ॥ नाथाय मुनयेऽगाधभगवद्भक्तिसिंधवे ॥ ४ ॥ तस्मै नमो मधुजिदंघ्रिसरोजतत्त्वज्ञानानुरागमहिमातिशयांतसीम्ने ॥ नाथाय नाथमुनयेऽत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम् ॥५॥ भूयोनमोऽपरिमिताच्युतभक्तितत्त्वज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः ॥ लोकेऽवतीर्णपरमार्थसमग्रभक्तियोगाय नाथमुनये यमिने वराय ॥६॥ तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः ॥ संदर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥७॥ माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम् ॥ आद्यस्य नः कुलपतेर्बकुलाभिरामं श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥८॥ यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्नस्मन्मनोरथपथः सकलः समेति ॥ स्तोष्यामि नःकुलधनंकुलदैवतं तत्पादारविन्दमरविन्दविलोचनस्य

॥९॥ तत्त्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातु-
मपि शर्वपिता महाद्यैः॥कर्तुं तदीयमहिमस्तुतिमुद्यताय
मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ १० ॥ यद्वाश्रमा-
वधि यथामति वाप्यशक्तः स्तौम्येवमेव खलु तेऽपि सदा
स्तुवन्तः॥ वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः को मज्ज-
तोरणुकुलाचलयोर्विशेषः ॥११॥ किंचैष शक्त्यतिशये
ननु तेऽनुकंप्यः स्तोतापि तु स्तुतिकृतेन परिश्रमेण॥तत्र
श्रमस्तु सुलभो मम मंदबुद्धेरित्युद्यमोऽयमुचितो मम
चाब्जनेत्र ॥१२॥ नावेक्षसे यदि ततो भुवनान्यमूनि
नालं प्रभो भवितुमेव कुतः॥प्रवृत्तिः एवं निसर्गसुहृदि
त्वयि सर्वजन्तो स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम्
॥ १३॥ स्वाभाविकानवधिकातिशयेशितृत्वं नारायण
त्वयि न मृष्यति वैदिकः कः ॥ ब्रह्मा शिवः शतमखः
परमस्वराडित्येऽपि यस्य महिमार्णवविप्रुषस्ते ॥१४॥
कः श्रीः श्रियः परमसत्त्वसमाश्रयः कः कः पुंडरीक-
नयनः पुरुषोत्तमः कः॥कस्यायुतायुतशतैकलांशकांशे
विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ॥ १५ ॥ वेदाप-
हारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदानैः।
कोऽन्यः प्रजा पशुपतिः परिपाति कस्य पादोदकेन स
शिवः स्वशिरोधृतेन ॥ १६ ॥ कस्योदरे हरवि-
रिञ्चिमुखः प्रपंचः को रक्षतीममजनिष्ट च

कस्य नाभेः ॥ कान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः कः केन चैष परवानिति शक्यशङ्कः ॥ १७ ॥ त्वां शील-रूपचरितैः परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः॥प्रख्यातदैवपरमार्थविदां मतैश्च नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥१८॥ उल्लङ्घितत्रिविधसीमसमा-तिशायिसंभावनं तव परिव्रढिमस्वभावम्॥ मायाबलेन भवतापि निगूह्यमानंपश्यन्ति केचिदनिशं त्वदनन्यभा-वाः ॥१९॥ यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्या-वरणानि यानि च॥गुणाः प्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभूतयः ॥२०॥ वशी वदान्यो गुणवानृजुः शुचिर्मृदुर्दयालुर्मधुरःस्थिरः समः । कृतीकृतज्ञस्त्वमसि स्वभावतः समस्तकल्याणगुणामृतोदधिः ॥२१॥ उपर्यु-पर्य्यब्जभुवोऽपि पूरुषान् प्रकल्प्य ते ये शतमित्यनु-क्रमात् ॥ गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नोद्यमतोऽतिशेरते ॥२२॥ त्वदाश्रितानां जगदुद्भवस्थि-तिप्रणाशसंसारविमोचनादयः ॥ भवन्ति लीलाविध-यश्च वैदिकास्त्वदीयगम्भीरमनोनुसारिणः ॥ २३ ॥ नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभू-मये॥नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैक-सिन्धवे ॥ २४ ॥ न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे॥अकिंचनोऽनन्यगतिः शरण्यं त्वत्पादमूलं शरणं प्रपद्ये ॥ २५ ॥ न निन्दितं कर्म

तदस्ति लोके सहस्रशो यन्न मया व्यधायि॥ सोऽहं विपा-
कावसरे मुकुन्द क्रन्दामि संप्रत्यगतिस्तवाग्रे ॥२६॥
निमज्जतोऽनन्तभवार्णवांतश्चिराय मे कूलमिवासि लब्धः।
त्वयापि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयायाः
॥ २७ ॥ अभूतपूर्वं मम भावि किं वा सर्वं सहे मे
सहजं हि दुःखम् ॥ किंतु त्वदग्रे शरणागतानां पराभवो
नाथ न तेऽनुरूपः ॥ २८ ॥ निरासकस्यापि न तावदु-
त्सहे महेश हातुं तव पादपङ्कजम् ॥ रुषा निरस्तोऽपि
शिशुः स्तनन्धयो न जातु मातुश्चरणौ जिहासति॥२९॥
तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदि-
च्छति ॥ स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरसं
हि वीक्षते॥३०॥ त्वदङ्घ्रिमुद्दिश्य कदापि केनचिद्यथा-
तथा वापि सकृत्कृतोञ्जलिः॥ तथैव मुष्णात्यशुभान्य-
शेषतः शुभानि पुष्णाति न जातु हीयते ॥ ३१ ॥
उदीर्णसंसारदवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृ-
तिम्॥ प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिंधु
शीकरः ॥ ३२ ॥ विलासविक्रांतपरावरालयं नमस्य-
दार्तिक्षपणे कृतक्षणम् ॥ धनं मदीयं तव पादपङ्कजं
कदा नु साक्षात्करवाणि चक्षुषा ॥ ३३ ॥ कदा पुनः
शंखरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनम् ॥
त्रिविक्रम त्वच्चरणाम्बुजद्वयं मदीयमूर्द्धानमलं करिष्यति
॥ ३४ ॥ विराजमानोज्ज्वलपीतवाससं स्मितातसीसू-

नसमामलच्छविम् ॥ निमग्ननाभिं तनुमध्यमुल्लसद्विशा-
लवक्षःस्थलशोभिलक्षणम् ॥३५॥चकासतं ज्याकिणक-
र्कशैः शुभैश्चतुर्भिराजानुविलंबिभिर्भुजैः ॥ प्रियावतंसो-
त्पलकर्णभूषणश्लथालका बंधविमर्दशंसिभिः ॥ ३६ ॥
उदग्रपीनांसविलंबिकुंडलालकावलीबन्धुरकम्बुकन्धरम्
मुखश्रिया न्यक्कृतपूर्णनिर्मलामृतांशुबिंबाम्बुरुहोज्ज्व-
लश्रियम् ॥३७॥ प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रम-
भ्रूलतमुज्ज्वलाधरम् ॥ शुचिस्मितं कोमलगण्डमुन्नसं
ललाटपर्यंतविलंबितालकम् ॥३८॥ स्फुरत्किरीटांगद-
हारकंठिकामणीन्द्रकाञ्चीगुणनूपुरादिभिः ।रथांगशंखा-
सिगदाधनुर्वरैर्लसत्तुलस्या वनमालयोज्ज्वलम् ॥३९॥
चकर्थ यस्याभवनं भुजान्तरं तव प्रियं धाम यदीयज-
न्मभूः ॥ जगत्समस्तं यदपांगसंश्रयं यदर्थमम्भोधिरम-
न्थ्यबन्धि च ॥४०॥ स्ववैश्वरूप्येण सदानुभूतयाप्य-
पूर्ववद्विस्मयमादधानया ॥ गुणेन रूपेण विलासचेष्टितैः
सदा तवैवोचितया तव श्रिया ॥४१॥ तया सहासीन-
मनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि ॥ फणामणि-
व्रातमयूखमंडलप्रकाशमानोदरदिव्यधामनि ॥ ४२ ॥
निवास शय्यासनपादुकांशुकोपधानवर्षातपवारणा-
दिभिः॥शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इती-
र्यते जनैः ॥ ४३ ॥ दासः सखा वाहनमासनं ध्वजो
यस्ते वितानं व्यजनं त्रयीमयः ॥ उपस्थितं तेन पुरो

मरुत्मता त्वदङ्घ्रिसम्मर्दकिणांकशोभिना॥४४॥त्वदीयमुक्तोज्झितशेषभोजिना त्वया विसृष्टात्मभरेण यद्यथा ॥ प्रियेण सेनापतिना निवेदितं तथानुजानन्तमुदारवीक्षणैः ॥ ४५ ॥ हताखिलक्लेशमलैः स्वभावतः सदानुकूल्यैकरसैस्तवोचितैः ॥ गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणे सचिवैर्यथोचितम् ॥ ४६ ॥ अपूर्वनानारसभावनिर्भरप्रबुद्धया मुग्धविदग्धलीलया ॥ क्षणाणुवत्क्षिप्तपरादिकालया प्रहर्षयन्तं महिषीं महाभुजम् ॥४७॥अचिंत्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतोदधिम्॥ श्रियः श्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थिकल्पकम् ॥ ४८ ॥ भवन्तमेवानुचरन्निरन्तरं प्रशांतनिःशेषमनोरथान्तरः ॥ कदाहमैकांतिकनित्यकिंकरःप्रहर्षयिष्यामिसनाथजीवितम् ॥४९॥ धिगशुचिमविनीतं निर्दयं मामलज्जं परम पुरुष योऽहं योगिवर्याग्रगण्यैः ॥ विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः ॥ ५० ॥ अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ॥ अपतिं शरणागतं हरे कृपाया केवलमात्मसात्कुरु ॥५१॥ अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि ॥ भगवन् भवदुर्दिने पथस्खलितं मामवलोकयाच्युत ॥ ५२ ॥ न मृषा परमार्थमेव मे श्रुणु विज्ञापनमेकमग्रतः ॥ यदि मे न दयिष्यसे ततो दयनीस्तव नाथदुर्लभः ॥ ५३ ॥ तदहं

त्वदृते न नाथवान्मदृते त्वं दयनीयवान्न च । विधिनि-
र्मितमेतदन्वयं भगवन् पालय मा स्म जीहपः ॥५४॥
वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथा-
विधः ॥ तदहं तव पादपद्मयोरहमद्यैव मया समर्पितः
॥५५॥ मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव
माधव॥नियतः स्वमिति प्रबुद्धधीरथवा किंनु समर्पयामि
ते॥५६॥अवबोधितवानिमां यथा मयि नित्यां भवदी-
यतां स्वयम्॥कृपयैवमनन्यभोग्यतां भगवन् भक्तिमपि
प्रयच्छ मे ॥ ५७ ॥ तव दास्यसुखैकसंगिनां भवनेष्व-
स्त्वपि कीटजन्म मे॥इतरावसथेषु मा स्मभूदपिमेजन्म
चतुर्मुखात्मना ॥ ५८ ॥ सकृत्त्वदाकारविलोकनाशया
तृणीकृतानुत्तमभुक्तिमुक्तिभिः ॥ महात्मभिर्मामवलो-
क्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुःसहः ॥ ५९ ॥
न देहं न प्राणान्न च सुखमशेषाभिलषितं न चात्मानं
नान्यत्किमपि तव शेषत्वविभवात् ॥ बहिर्भूतं नाथ
क्षणमपि सहे यातु शतधा विनाशं तत्सत्यं मधुमथन-
विज्ञापनमिदम् ॥६०॥ दुरन्तस्यानादेरपरिहरणीयस्य
महतो विहीनाचारोऽहं नृपशुशुरभस्यास्पदमपि ॥
दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे तव स्मारं
स्मारं गुणगणमितीच्छामि गतभीः॥६१॥अनिच्छन्नप्येवं
यदि पुनरितीच्छन्निव रजस्तमश्छन्नच्छद्मस्तुतिवचनभ
गीमरचयम्॥तथापीत्थं रूपं वचनमवलम्ब्यापिकृपया

त्वमेवैवंभूतं धरणिधर मे शिक्षय मनः ॥ ६२ ॥ पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम् ॥ त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥६३॥ जनित्वाहं वंशे महति जगति ख्यातयशसां शुचीनां युक्तानांगुणपुरुषतत्त्वस्थितिविदाम् ॥ निसर्गा-देव त्वच्चरणकमलैकान्तमनसामधोधः पापात्मा शरणद निमज्जामि तमसि ॥६४॥ अमर्यादः क्षुद्रश्चलमतिरसू-याप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ॥ नृशंसः पापिष्ठः कथमहमितो दुःखजलधेरपारादुत्तीर्ण-स्तव परिचरेयं चरणयोः ॥ ६५ ॥ रघुवर यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यस्य चैद्यस्य कृष्णः ॥ प्रतिभवमपराद्धुर्मुग्धसायुज्यदोभूर्वद किमु पदमागस्तस्य तेऽस्ति क्षमायाः ॥ ६६ ॥ ननु प्रसन्नः सकृदेव नाथ तमाहमस्मीति च याचमानः ॥ तवानु-कम्प्यः स्मरतः प्रतिज्ञां मदेकवर्ज्यं किमिदं व्रतं ते ॥६७॥ अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्म-वन्तम् ॥ पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्त-मचिन्तयित्वा ॥६८॥ यत्पदाम्भोरुहध्यानविध्वस्ता-शेषकल्मषः ॥ वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥६९॥ इति श्रीयामुनार्यविरचितमालवन्दारस्तोत्रं सम्पूर्णम् ॥ १० ॥

# अथ वरदवल्लभस्तोत्रम्

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यासनं वाहनं वेदात्मा विहगेश्वरो जवनिका माया जगन्मोहिनी ॥ ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥१॥ यस्यास्ते महिमानमात्मनइव त्वद्वल्लभोऽपिप्रभुर्नालंमातुमियत्तया निरवधिं नित्यानुकूलं स्वतः ॥ तां त्वां दास इति प्रसन्न इति च स्तोष्याम्यहं निर्भयो लोकैकेश्वरि लोकनाथ-दयिते दान्ते दयान्ते विदन् ॥२॥ ईषत्त्वत्करुणानिरी-क्षणसुधासन्धुक्षणाद्रक्ष्यते नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् ॥ श्रेयो नह्यरविन्दलोचनमनः कान्ता-प्रसादादृते संसृत्याक्षरवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित् ॥ ३ ॥ शान्तानन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरेर्मूर्तं ब्रह्म ततोऽपि यत्प्रियतरं रूपं यदत्यद्भुतम् ॥ यान्यन्यानियथासुखं विहरतो रूपाणि सर्वाणितान्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥४॥ आकारत्रय-संपन्नामरविन्दनिवासिनीम् ॥ अशेषजगदीशित्रीं वन्दे वरद वल्लभाम् ॥ ५ ॥ ११ ॥

# अथ भवमङ्गलाष्टकम्

श्रीरङ्गं करशैलमञ्जनगिरौ शेषाद्रिसिंहाचलं श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिषम् ॥ श्रीमद्द्वारवती-

प्रयागमथुरायोध्यागयापुष्करंशालग्रामनिवासिनाविज
यते रामानुजोऽयंमुनिः॥१॥सर्वैषां कृतिनांचरन्ति गुरवः
कैङ्कर्यनिष्ठाहरेः श्रीरामानुजयोगनायकमणिश्रीपादपद्मा
लयाः॥ भोग्याष्टाक्षरमंत्ररत्नचरमश्लोकानुसन्धायिनो
वंद्या भागवतोत्तमाःप्रतिदिनं कुर्वंतु मे मङ्गलम् ॥२॥स
श्रीमान्परमः पुमानथचतुर्व्यूहावतारस्ततो जाताव्यूह
परंपराः सुरचिताः श्रीकेशवाद्याः पराः ॥ एकाम्भोनि
धिशेषभोगशयनन्यग्रोधपत्राश्रयक्षीरोदन्वदनन्ततल्पसु
खदाः कुर्वन्तु मे मङ्गलम्॥३॥श्रीरामानुजयोगिपूर्णय
मुनावास्तव्यमालाधरानाथः कारितनूजसैन्यपरमः श्री
मांश्च नारायणः।चाण्डाद्याःकुमुदादयः परिजना नित्याश्च
मुक्ताश्च ये श्रीवैकुण्ठनिवासिनोऽमरवराः कुर्वन्तु मे
मंगलम् ॥ ४ ॥ मत्स्यः कूर्मवराहमानवहरि श्रीवामनो
भार्गवः श्रीरामोबलदेवदेवकिसुतौ कल्की दशैते क्रमात्।
अन्तर्याम्यथ योगिनां हृदयगोप्यर्च्चावताराः शुभा
श्रीरंगादिसमस्तधामनिलयाःकुर्वन्तु मे मङ्गलम् ॥५॥
श्रीभूमिर्विमलादयो नयसुधापद्माधृताःशक्तयो वेदा वेद
वती धरापि च महालक्ष्मीःसुकेशालया ॥ देवी भार्गव
भामिनी जनकजा सा रेवती रुक्मिणी वेदाद्या प्रभया
न्विता दशरमाःकुर्वन्तु मे मङ्गलम्॥६॥ शत्रुध्वंसिसुद
र्शनं सुखकरं श्रीपाञ्चजन्यः सदा बाणाः शार्ङ्गममर्षहर्ष
जनकं कौमोदकी नन्दकः॥सत्पद्मं मुसलं हलं च परशु

दिव्यायुधानि प्रभोः सेनाधीशखगेशभोगिपतयः कुर्वन्तु मे मंगलम् ॥७॥ हंसो धर्मनिदर्शनो हरिमुखो यज्ञश्च धन्वन्तरिः पाथोऽजो मिथुनोदितो हरिरलंकारः पृथिव्या पृथुः ॥ आद्यो वेदमुखश्च जन्मनिलयो नारायणो वै विराट् श्वेतद्वीपनिवासिजीवहृदयः कुर्वन्तु नो मंगलम् ॥ ८ ॥ विष्वक्सेनमुनिर्ह्यनन्तमुनयः श्रीसंप्रदायादिमा येऽन्ये भूतभविष्यदृश्यसमये श्रीरंगभूषणाः ॥ ये वै भागवताः सुखा दशगणा भृत्या नरा वानराः श्वेतद्वीपनिवासिनो नरवराः कुर्वन्तु नो मंगलम् ॥९॥ इत्युक्तं भवमंगलाष्टकमिदं सुश्लोकसंकीर्तनं श्रीमद्भागवतप्रसादजनकं श्रीवेंकटेशेन यत् ॥ भक्ता ये प्रपठन्ति शुद्धमनसः प्रोत्फुल्लहृत्पंकजास्तेषां वांछितमंगलं प्रकुरुते भक्तिप्रियो माधवः ॥ १० ॥ १२ ॥

## अथ पञ्चायुधस्तोत्रम्

स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटितुल्यम् ॥ सुरद्विषा प्राणविनाशिविष्णोश्चक्रं सदाहं शरणं प्रपद्ये ॥१॥ विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्प्पहन्ता ॥ तं पाञ्चजन्यं शशिकोटिशुभ्रं शंखं सदाहं शरणं प्रपद्ये ॥ २ ॥ हिरण्मयीं मेरुसमानसारां कौमोदकीं दैत्यकुलैकहंत्रीम् ॥ वैकुण्ठवामाग्रकराभिमृष्टां गदां सदाहं शरणं प्रपद्ये ॥ ३ ॥ रक्षोऽसुराणां कठिनोग्रकण्ठच्छेदक्षरच्छोणितदिग्धधारम् ॥ तं नन्दकं नाम हरेः

प्रदीप्तं खड्गं सदाहं शरणं प्रपद्ये ॥४॥ यज्ज्यानिनाद-श्रवणात्सुराणां चेतांसि निर्मुक्तभयानि सद्यः ॥ भवन्ति दैत्याशनिबाणवर्षि शार्ङ्गं सदाहं शरणं प्रपद्ये ॥ ५ ॥ इमं हरेः पञ्चमहायुधानां स्तवं पठेद्योऽनुदिनं प्रभाते ॥ समस्तदुःखानि भयानि सद्यः पापानि नश्यन्ति सुखानि संति ॥ ६ ॥ वने रणे शत्रुजलाग्निमध्ये यदृच्छयादत्सु महाभयेषु ॥ इदं पठन् स्तोत्रमनाकुलात्मा सुखी भवेत्तत्कृतसर्वरक्षः ॥ ७ ॥ भोगे रोगभयं सुखे क्षय-भयं वित्ते च राज्ञो भयं विद्यायां कलिभीस्तपे करणभी रूपाद्भयं योषिति ॥ इष्टे शोकभयं रणे रिपु-भयं काये कृतान्ताद्भयं चेत्थं जन्म निरर्थकं क्षितितले विष्णोः पदं निर्भयम् ॥ ८ ॥ इति पञ्चायुधस्तोत्रं सम्पूर्णम् ॥ १३ ॥

## अथ संक्षिप्तरामायणम्

आदौ रामतपोवनादिगमनं हेम्नोरुरोर्मारणं वैदेही-हरणं जटायुमरणं सुग्रीवसंभाषणम् ॥ वालीनिर्दलनं समुद्रतरणं लंकापुरीदाहनं पश्चाद्रावणकुम्भकर्णहननं चैतद्धि रामायणम् ॥ इति श्रीरामायणं सम्पूर्णम् ॥ १४॥

## अथ प्रणामश्लोकः

अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ॥ अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु॥१॥ इति साष्टांगप्रणामकर्ता वदेत् ॥

# अथ वेंकटेशमंगलस्तोत्रम्

श्रीरम्यजामातृमुनीन्द्रशासनाद्यो मंगलाशासनसौप्रभातिके॥ चक्रे प्रपत्तिं च वृषाचलेशितुस्तं वादिभीकृद्गुरुमाश्रयाम्यहम् ॥ १ ॥ श्रियः कांताय कल्याणनिधये निधयेऽर्थिनाम् ॥ श्रीवेंकटनिवासाय श्रीनिवासाय मंगलम् ॥ १ ॥ लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषे ॥ चक्षुषे सर्वलोकानां वेंकटेशाय मंगलम् ॥ २ ॥ श्रीवेंकटाद्रिशृंगाग्रमंगलाभरणाङ्घ्रये ॥ मंगलानां निवासाय श्रीनिवासाय मंगलम् ॥ ३ ॥ सर्वावयवसौंदर्यसम्पदासर्वचेतसाम् ॥ सदा संमोहनायास्तु वेंकटेशाय मंगलम् ॥ ४ ॥ नित्याय निरवद्याय सत्यानन्तचिदात्मने ॥ सर्वान्तरात्मने श्रीमद्वेंकटेशाय मंगलम् ॥५॥ स्वतस्सर्वविदे सर्वशक्तये सर्वशोषिणे ॥ सुलभाय सुशीलायवेंकटेशाय मंगलम् ॥ ६ ॥ परस्मै ब्रह्मणे पूर्णकामाय परमात्मने ॥ प्रयुजे परतत्त्वाय वेंकटेशाय मंगलम् ॥ ७ ॥ अकारतत्त्वमश्रान्तमात्मनामनुपश्यताम् ॥ अतृप्त्यमृतरूपाय वेंकटेशाय मंगलम् ॥ ८ ॥ प्रायः स्वचरणौ पुंसां शरण्यत्वेन पाणिना ॥ कृपयादिशतः श्रीमद्वेंकटेशाय मंगलम् ॥ ९ ॥ दयामृतरंगिण्यास्तरंगैरपि शीतलैः ॥ अपांगैस्सिञ्चते विश्वं वेंकटेशाय मंगलम् ॥ १० ॥ स्रग्भूषांम्बरहेतीनां सुषमावहमूर्तये ॥ सर्वार्तिशमनायास्तु

वेंकटेशाय मंगलम् ॥ ११ ॥ श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे ॥ रमया रममाणाय वेंकटेशाय-मंगलम् ॥ १२ ॥ श्रीमत्सुन्दरजामातृमुनिमानसवासिने ॥ सर्वलोकनिवासाय श्रीनिवाशाय मंगलम् ॥ १३ ॥ वासुदेवाय शान्ताय शुद्धज्ञानस्वरूपिणे ॥ नमः श्रीवेंकटेशाय श्रीनिवासाय मंगलम् ॥ १४ ॥ मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ॥ सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गलम् ॥ १५ ॥ इति वेंकटेशस्य मङ्गलस्तोत्रं सम्पूर्णम् ॥ १५ ॥

## अथ क्षमाषोडशीस्तोत्रम्

श्रीमते रामानुजाय नमः ॥ श्रीपराशरभट्टाचार्य्यः श्रीरंगेशपुरोहितः ॥ श्रीवत्सांकसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥ १ ॥ श्रीरंगेश यया करोषि जगतां सृष्टिप्रतिष्ठाक्षयानत्रामुत्र च भोगमक्षयसुखं मोक्षं च तत्तत्तृषाम् ॥ त्वत्स्वातन्त्र्यमपोह्य कल्पितजगत्क्षेमातिहृद्या स्वतः क्षांतिस्ते करुणासखी विजयतां क्षेमाय सर्वात्मनाम् ॥ २ ॥ पापानां प्रथमोऽस्म्यहं भवति चेच्छास्त्रं प्रमाणं परं श्रीरंगेश न विद्यतेऽत्र विषयः सन्तेव ते साक्षिणः ॥ पृष्ट्वा तानधुना मयोदितमिदं सत्येन गृह्येत चेत् सत्यं ह्युक्तमिति क्षमस्व भगवन् सर्वं तदस्मत्कृतम् ॥३॥ त्वत्क्षांतिः खलु रंगराज महती तस्याः पुनस्तोषणे पर्याप्तं न समस्तचेतनकृतं पापं ततो मामकम् ॥

लक्ष्यं नेति न मोक्तुमर्हति यतः कुत्रापितुल्योमयानान्यः
सिद्ध्यति पापकृत्तदनया लब्धं तु नोपेक्ष्यताम् ॥ ४ ॥
पुण्यं पापमिति द्वयं खलु तयोः पूर्वेण यत्साध्यते तत्त्व-
द्विस्मृतिकारकं तनुभृता रङ्गेश संजायते ॥ पाश्चात्यस्य
तु यत् फलं तदिह ते दुःखच्छिदः स्मारकं तेनानेन कृतं
तदेव शिशुनेत्यस्मत्कृतं क्षम्यताम् ॥५॥ पुण्यं यत्तव
पूजनं भवति चेत्तत्कर्तुरिष्टे कृते तत्स्याद्रङ्गपते कृतप्र-
तिकृतं सर्वेऽपि तत्कुर्वते ॥ पापं चेदपराध एव भवतस्त-
त्कर्तृसंरक्षणे क्षान्तिस्ते निरुपाधिकी निरुपमा लक्ष्येत
तत्क्षम्यताम् ॥६॥ न द्वित्राणि कृतान्यनेन निरयैर्नालं
पुनः कल्पितैः पापानामिति मत्कृते तदधिकान् कर्तुं
प्रवृत्ते त्वयि ॥ तेभ्योऽप्यभ्यधिकानि तान्यहमपि क्षुद्रः
करोमि क्षणात्तद्यत्नस्तव निष्फलः खलु भवेत्तत्ते क्षमैव
क्षमा ॥ ७ ॥ संभूयाखिलपातकैर्बहुविधं स्वं स्वं फलं
दीयतां सर्वं सह्यमिदं मया त्वयि हरे जाग्रत्यपि त्रातरि॥
दुःखाक्रान्तमवेक्ष्य मामिह जनो दुष्टाशयस्त्वद्गुणान्
क्षान्त्यादीन् प्रतिदुर्वचो यदि वदेत्सोढुं न तच्छक्यते
॥ ८ ॥ क्षान्तिर्नाम वरो गुणस्तव महान् श्रीरङ्ग पृथ्वी-
पते सोऽयं सन्नपि सापराधनिवहाभावे न विद्योतते ॥
तस्मान्नैकविधापराधकरणेनिष्ठावता नित्यशःप्राप्नोत्येष
मया प्रकाशमतुलं प्राप्स्याम्यहं च प्रथाम् ॥९॥ मत्पा-
पक्षपणाय योजयसि चेत् घोरेण दण्डेन मां रंगाधीश्वर-

केवलाघकरणाद्दुःखंमम स्यान्महत्॥तद्द्रष्टुर्भवतोऽपि
दुःखमतुलं घोरं दयालोर्भवेत् तस्मात्तेऽपि सुखाय
मत्कृतमिदं सर्वं त्वया क्षम्यताम् ॥ १० ॥ देव त्वां
शरणं प्रपन्नमपिमां दुःखान्यनन्याश्रयं बाधन्ते यदिसर्व-
पापनिवहात्त्वां मोक्षयिष्याम्यहम् ॥ इत्युक्तं तव वाक्य-
मर्थविधुरं जायेत यद्वा भवांस्तत्राशक्त इति प्रथेत हि
ततो मां रक्षतु त्वत्क्षमा ॥११॥ न त्वं क्षाम्यसि चेदिदं
मम कृतं नास्त्यत्र काचित् क्षतिः पूर्वं यत्समभूत्तदेवहि
पुनर्जायेत तज्जायताम् ॥ यद्वा स्यादधिकं च सोऽपि सु
महाल्लाभोऽस्तु मे तादृशःस्वामिन्दासजनस्तवायमधिकं
स्वैरेण दूरी भवेत् ॥१२॥ सोहं क्षुद्रतया जुगुप्सित तमं
दुष्कर्म नित्यं स्मरन् कुर्वन्काममशुद्धरीतिरभवं श्रीरंग
पृथ्वीपते ॥ एतत्ते महतो विशुद्धमनसा स्मर्तुं न युक्तं
खलु क्षान्त्या विस्मर तत्ततोऽहमसुखान्मुक्तो भवेयंसुखी
॥ १३ ॥ तत्तत्कर्मफलानुरूपमखिलो लोकस्त्वया सृ-
ज्यते तस्मात्कर्मवशंवदत्वमधिकं वक्तुं तवापि क्षमम् ॥
श्रीरंगेश्वरतत्प्रशान्तिविधये क्षान्त्या निराकृत्य मे सर्वं
पातकमाशु दर्शय भवत्स्वातन्त्र्यमत्युज्ज्वलम् ॥१४॥
श्रीरङ्गेश वचो मदीयमधुना व्यक्तं त्वया श्रूयतां पुण्यं
तत्फलसंगमात्रविरहाद्भूयो न मां प्राप्नुयात्॥ पापं नैव
तथा फलं वितनुते शक्यं न तद्वारणं तत्क्षान्त्या तव
शक्यमेव तदिदं सद्यस्त्वया कल्प्यताम् ॥ १५ ॥ श्रीरं-

गेश्वर पुण्यपापफलयोः स्वाधीनतां कुर्वतोः सर्वेषां सुखदुःखयोः स्वयमहं मन्नाशयो मामपि ॥ स्मर्तुं न प्रभवामि किं पुनरहं त्वामन्तरन्तः स्थितं तत्ते त्वं क्षमया निरस्य कुरु मे त्वद्ध्यानयोग्यां दशाम् ॥१६॥ अल्पं चेदनपेक्षणीयसरणावारोप्यतां मत्कृतं किञ्चिद्भूरि भवेदिदं यदिगुरून् सम्प्रेक्ष्यमे त्यज्यताम् ॥ यद्वानन्त मनन्तवैभवजुषा रङ्गक्षमावल्लभ त्वत्क्षान्त्याःखलुलक्ष्य तामनुगुणा मानीयतान्तरवया ॥१७॥ श्रीमान्कूरान्ववाये कलशजलनिधौ कौस्तुभांशोऽवतीर्णः श्रीवेदव्यास भट्टारकतनयवरो रंगराजस्य हृद्यः ॥ वेदाचार्य्यग्र्यनामा विदितगुणगणो रङ्गिणः स्तोत्रमेतच्चक्रे नित्याभिजप्यं सकलतनुभृतां सर्वपापापनुत्त्यै ॥ १८ ॥ संत्यक्तसर्वविहितकिसमर्थकामश्रद्धालुमन्वहमनुष्ठितनिन्द्यकृत्यम् अत्यन्तनास्तिकमनात्मगुणोपपन्नं मां रंगराज कृपया परया क्षमस्व ॥ १९ ॥ इति श्रीक्षमाषोडशीस्तोत्रं सम्पूर्णम् ॥ १६ ॥

## श्री श्रीस्तवः

स्वस्ति श्रीदिशतादशेषजगतां सर्गोपवर्गस्थितीः स्वर्गं दुर्गतिमापनिकपदं सर्वं च कुर्वन् हरिः ॥ यस्या वीक्ष्यमुख तदिङ्गितपराधीतो विधत्तेऽखिलं क्रीडेयं खलु नान्यवऽस्परसदास्यादैकरस्यात्तपा ॥ १ ॥ हेश्रीदेवि समस्तलोकजननी त्वां स्तोतुमीहामहे युक्तां भावय

भारतीं प्रगुणय प्रेमप्रधानां धियम् ॥ भक्तिं वर्धयनंदया-
श्रितमिमं दासं जनं तावकं लक्ष्यं लक्ष्मि कटाक्षवीचि
सृतेस्ते स्याम चामी वयम् ॥२॥ स्तोत्रं नाम किमाम-
नन्ति कवयो यद्यन्यदीयान् गुणानन्यत्रत्वसतोऽधिरोप्य
भणितिःसा तर्हि बन्ध्यात्वयि॥सम्यक्सत्यगुणाभिवर्ण-
नमथो ब्रुयुः कथं तादृशी वाग्वाचस्पतिनापि शक्यरचन
त्वत्सद्गुणार्णोनिधौ ॥३॥ ये वाचां मनसां च दुर्ग्रहतय
ख्याता गुणास्तावकास्तानेव प्रति साम्बुजिह्वमुदिता
यन्मामिका भारती ॥ हास्य तत्तु न मन्महे नहि चको
यैकाखिलां चन्द्रिकां नालं पातुमिति प्रगृह्य रसनामासी
तसत्यां तृषि ॥ ४ ॥ क्षोदीयानपि दुष्टबुद्धिरपि निः
स्नेहोऽप्यनीहोऽपिते कीर्तिं देवि लिहन्नहं नच बिभेम्यज्ञो
न जिह्रेमिच॥ दुष्येत्सा तु न तावता नहि शुनालीढाऽपि
भागीरथी दुष्येच्छ्ववापि न लज्जते नच बिभेत्यार्तिस्तु
शाम्येच्छुनः ॥५॥ ऐश्वर्यं महदेव वाल्पमथवा दृश्येत
पुंसां हि यत्ताल्लक्ष्म्याः समुदीक्षणात्तव यतः सार्वत्रिक
वर्तते ॥ तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायण
धन्यं मन्यत ईक्षणात्तव यतः स्वात्मानमात्मेश्वरः॥६॥
ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्य्यलावण्ययोरूपं यच्च
हि मंगलं किमपि यल्लोके सदित्युच्यते ॥ तत्सर्वं त्वद
धीनमेव हि यतःश्रीरित्यभेदेन वा यद्वा श्रीमदितिदृशेन
वचसादेविप्रथामश्नुते ॥ ७ ॥ देवि त्वन्महिमावधिर्

हरिणा नापि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोः सर्वज्ञता हीयते ॥ यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुर्व्योमाम्भोजमिदन्तयाखलुविदन् भ्रान्तोऽयमित्युच्यते ॥ ८ ॥ लोके वनस्पतिबृहस्पतितारतम्यं यस्याः कटाक्षपरिणाममुदाहरंति ॥ सा भारती भगवती तु यदीयदासी तां देवदेवमहिषीं श्रियमाश्रयामः ॥९॥ यस्याः कटाक्षमृदुवीक्षणवीक्षणेन सद्यस्समुल्लसितपल्लवमुल्ललास ॥ विश्वं विपर्ययसमुत्थविपर्ययं प्राक् तान्देवदेवमहिषीं श्रियमाश्रयामः ॥ १० ॥ इति श्रीश्रीस्तवः समाप्तिमगात् ॥ १७ ॥

## श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्

श्रीभूमिरुवाच ॥ अलंकृतं जन्म पुंसामपि नन्दव्रजौकसाम् ॥ तस्य देवस्य कृष्णस्य लीलाविग्रहधारिणः ॥१॥ यानि यानि प्रयुक्तानि सन्ति नामान्यनेकशः ॥ मुख्यानि तेषु नामानि श्रोतुकामा चिरादहम् ॥ २ ॥ एतानि ब्रूहि नामानि वासुदेवस्य वासुके॥ नातः परतरं पुण्यं त्रिषु लोकेषु मे भवेत् ॥ ३ ॥ शेष उवाच ॥ वसुन्धरे वरारोहे सर्वकामसुखप्रदम्॥सर्वमंगलमूर्द्धन्यमणिमाद्यष्टसिद्धिदम् ॥४॥ महापातककोटिघ्नं सर्वतीर्थफलप्रदम् ॥ शृणु देवि प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ॥५॥ सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या च यत्फलम् ॥ एकावृत्त्या च कृष्णस्य नामैकं तत्प्रयच्छति ॥ ६ ॥ तस्मा

त्पुण्यतमं चैतत्स्तोत्रं शृणु वसुन्धरे ॥ ॐ अस्य श्रीकृष्णाष्टोत्तरशतनामामृतस्तोत्रमन्त्रस्य ॥ श्रीशेषो भगवानृषिः ॥ अनुष्टुप्छन्दः ॥ श्रीकृष्णः परमात्मा देवता ॥ श्रीकृष्णप्रसादसिद्ध्यर्थं जपे विनियोगः ॥ अथ ध्यानम् ॥ बालाय नीलवपुषे नवकिंकिणीकजालाभिरामजघनाय दिगंबराय ॥ शार्दूलदिव्यनखभूषणभूषिताय नन्दात्मजाय नवनीतमुषे नमस्ते ॥ ॐ श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ॥ वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ ७ ॥ श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ॥ चतुर्भुजा चक्राब्जगदाखड्गाद्युदायुधः ॥८॥ देवकीनन्दनः श्रीशोनन्दगोपप्रियात्मजः ॥ यमुनावेगसंहारी बलभद्र प्रियानुजः ॥ ९ ॥ पूतनाजीवितहरः शकटासुरखंडनः ॥ नन्दव्रजजनानन्दी सच्चिदानंदविग्रहः ॥ १० ॥ नवनीतविलिप्तांगो नवनीतनटोऽनघः ॥ नवनीतनवाहारो मुचुकुन्दप्रसादकः ॥११॥ षोडशस्त्रीसहस्रेशस्त्रिभंगललिताकृतिः ॥ शुकवागमृताब्धीन्दुर्गोविन्दो योगिनां पतिः ॥१२॥ वत्सवाटचरोऽनन्तो धेनुकासुरखण्डनः ॥ तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ॥ १३ ॥ उत्तालतालभेत्ता च तमालश्यामलाकृतिः ॥ गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥१४॥ इलापतिः परं ज्योतिर्यादवेन्द्रो यदूद्वहः ॥ वनमाली पीतवासाः पारिजातापहारकः ॥ १५ ॥ गोवर्द्धनाचलो

ह्वर्ता गोपालःसर्वपालकः॥ अजो निरञ्जनः कामजनकः
कञ्जलोचनः ॥१६॥ मधुहा मथुरानाथो द्वारिकानायको
बली ॥ वृन्दावनान्तः संचारी तुलसीदामभूषणः॥१७॥
स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ॥ कुब्जाकृष्टाम्ब
रधरो मायी परमपूरुषः ॥१८॥ मुष्टिकासुरचाणूरमल्ल-
युद्धविशारदः ॥ संसारवैरी कंसारिर्मुरारिर्नरकान्तकः
॥ १९ ॥ अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः ॥
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः ॥ २० ॥
विदुराक्रूरवदो विश्वरूपप्रदर्शकः ॥ सत्यवाक् सत्यसं-
कल्पः सत्यभामारतो जयी ॥ २१ ॥ सुभद्रापूर्वजो
जिष्णुर्भीष्ममुक्तिप्रदायकः॥जगद्गुरुर्जगन्नाथो वेणुवाद्य
विशारदः ॥ २२ ॥ वृषभासुरविध्वंसी बाणासुरकरा-
न्तकः ॥ युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥२३॥
पार्थसारथिरव्यक्तोगीतामृतमहोदधिः ॥ कालीयफणमा
णिक्यरञ्जितश्रीपदाम्बुजः ॥ २४ ॥ दामोदरो यज्ञ-
भोक्ता दानवेन्द्रविनाशकः ॥ नारायणः परं ब्रह्म पन्नगा-
शनवाहनः ॥ २५ ॥ जलक्रीडासमासक्तगोपीवस्त्रापहा-
रकः॥पुण्यश्लोकस्तीर्थपदो वेदवेद्यो दयानिधिः ॥२६॥
सर्वभूतात्मकः सर्वग्रहरूपी परात्परः ॥ एवं श्रीकृष्णदे-
वस्य नाम्नामष्टोतरं शतम् ॥२७॥ कृष्णेन कृष्णभक्तेन
श्रुत्वा गीतामृतं पुरा ॥ स्तोत्रं कृष्णप्रियकरं कृतं तस्मा
न्मया श्रुतम् ॥२८॥ कृष्णनामामृतं नाम परमानन्द-

कारणम् ॥ अनुपद्रवदुःखघ्नं परमायुर्विवर्द्धनम् ॥२९॥ दानं व्रतं तपस्तीर्थं यत्कृते त्विह जन्मनि ॥ पठतां शृण्वतां चैव फलं कोटिगुणं भवेत् ॥३०॥ पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ॥ धनावहं दरिद्राणां जयेप्सूनां जयावहम् ॥ ३१ ॥ शिशूनां गोकुलानां च पुष्टिदं पूर्णपुण्यदम्॥ समस्तकामदं दिव्यं कोटिजन्माघनाशनम् ॥३२॥ अन्ते च कृष्णस्मरणं भवतापत्रयापहम्॥कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने॥३३॥ नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥ इमं मन्त्रं महादेवि ब्रह्मनिष्ठो दिवानिशम् ॥३४॥ मनसा चिंतयन्नित्यं जपन् शुद्धशरीरभाक् ॥ सर्वग्रहानुग्रहभाक् सर्वप्रियतमो नरः ॥३५॥ पुत्रपौत्रैः परिवृतः समृद्धं फलमाप्नुयात्॥विलस्य भोगानन्ते च कृष्णसायुज्यमाप्नुयात् ॥३६॥ शंखचक्रगदापाणे द्वारकानिलयाच्युत ॥ गोविंद पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥३७॥ इति श्रीशेषधरणीसंवादे कृष्णाष्टोत्तरशतनामस्तोत्रं समाप्तिमगात् ॥ १८ ॥

## श्रीमुकुन्दमालास्तोत्रम्

घुष्यते यस्य नगरे रंगयात्रा दिने दिने ॥ तमहं शिरसा वंदे राजानं कुलशेखरम् ॥ श्रीवल्लभेति वरदेति दयापरेति भक्तप्रियेति भवलुण्ठनकोविदेति ॥ नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिपदं कुरु मां

मुकुन्द ॥ १ ॥ जयतु जयतु देवो देवकीनंदनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ॥ जयतु जयतु मेघश्यामलः कोमलांगो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥२॥ मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् ॥ अविस्मृतिस्त्वच्चरणारविंदे भवे भवे मेऽस्तु भवत्प्रसादात् ॥३॥ नाहं वंदे तव चरणयोर्द्वन्द्वमद्वंद्वहेतोः कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् ॥ रम्या रामा मृदुतनुलता नंदने नाऽभिरन्तुं भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ४ ॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्यद्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम् ॥ एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥५॥ दिवि वा भुवि वा ममास्तुवासो नरके वा नरकान्तके प्रकामम् ॥ अवधीरितशारदारविंदौ चरणौ ते मरणेऽपि चिंतयामि ॥६॥ कृष्ण त्वदीयपदपङ्कजपञ्जरांतमद्यैव मे विशतु मानसराजहंसः ॥ प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥७॥ चिंतयामि हरिमेव संतत मंदमंदहसिताननाम्बुजम् ॥ नंदगोपतनयं परात्परं नारदादिमुनिवृन्दवन्दितम् ॥८॥ करचरणसरोजे कान्तिमन्नेत्रमीने श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे ॥ हरिसरसि विगाह्याऽपीयतेजोजलौघंभवमरुपरिखिन्नः क्लेशमद्यत्यजामि

॥९॥ सरसिजनयने सशंखचक्रे मुरभिदि माविरमस्व चित्तरंतुम्॥सुखतरमपरं न जातु जाने हरिचरणस्मरणाऽमृतेन तुल्यम्॥१०॥मा भैर्मन्द मनो विचिन्त्य बहुधा यामीश्चिरं यातना नामी नः प्रभवन्ति पापरिपवःस्वामी ननु श्रीधरः॥ आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरोदासस्य किंनक्षमः ॥११॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम्॥ विषमविषयतोये मज्जतामप्लवानां भवतु शरणमेको विष्णुपोतो नराणाम्॥१२॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मास्म गाः कातरत्वम्॥सरसिजदृशि देवे तावकी भक्तिरेकानरकभिदि निषण्णा तारयिष्यत्यवश्यम्॥ १३॥ तृष्णातोये मदनपवनोद्भूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसंघाकुले च॥ संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन् पादाम्भोजे वरद भवतो भक्तिनावं प्रयच्छ॥१४॥ मा द्राक्षं क्षीणपुण्यान् क्षणमपि भवतो भक्तिहीनान् पदाब्जे मा श्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातम्॥मास्मार्षं माधव त्वामपि भुवनपते चेतसाऽपह्नुवानान् मा भूवं त्वत्सपर्यापरिकररहितो जन्मजन्मान्तरेऽपि॥१५॥ जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं पाणिद्वन्द्व समर्चयाऽच्युतकथां श्रोत्रद्वयं त्वं शृणु॥कृष्णं लोकय लोचनद्वय हरे-

गंच्छांघ्रियुग्मालयं जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्द्धन्नमाऽधोक्षजम् ॥१६॥ हे लोकाः शृणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ॥ अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम् ॥ १७ ॥ हे मर्त्याः परमं हितं शृणुत वो वक्ष्यामि संक्षेपतः संसारार्णवमापदूर्मिबहुलं सम्यक्प्रविश्य स्थिताः ॥ नानाज्ञानमपास्य चेतसि नमो नारायणायेत्यमुं मन्त्रं संप्रणवं प्रणामसहितं प्रावर्तयध्वं मुहुः ॥१८॥ पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुस्फुलिङ्गो लघुस्तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ॥ क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ता सुरा दृष्टा यत्र स तावको विजयते भूमाऽवधूतावधिः ॥१९॥ बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना ॥ नित्यंत्वच्चरणारविन्दयुगलध्यानामृतास्वादिनामस्माकं सरसीरुहाक्ष सततं सम्पद्यतां जीवितम् ॥ २० ॥ हे गोपालक हे कृपाजलनिधे हे सिंधुकन्यापते हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव ॥ हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥ २१ ॥ भक्तापायभुजङ्गगारुड़मणिस्त्रैलोक्यरक्षामणिर्गोपीलोचनचातकाम्बुदमणिः सौंदर्यमुद्रा-

मणिः ॥ यः कान्तामणिरुक्मिणीघनकुचद्वन्द्वैकभूषा-
मणिः श्रेयो देवशिखामणिर्दिशतु नो गोपालचूडामणिः
॥२२॥ शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसम्पूज्य-
मन्त्रं संसारोच्छेदमन्त्रं समुचिततमसः संघनिर्याणमंत्रम्
सर्वैश्वर्यैकमंत्रं व्यसनभुजगसन्दष्टसंत्राणमन्त्रं जिह्वे श्री-
कृष्णमन्त्रं जपजप सततं जन्मसाफल्यमन्त्रम् ॥२३॥
व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं दैत्येन्द्रार्ति
करौषधं त्रिभुवने संजीवनैकौषधम् ॥ भक्तात्यन्तहितौषधं
भवभयप्रध्वंसनैकौषधं श्रेयःप्राप्तिकरौषधं पिब मनः
श्रीकृष्णदिव्यौषधम् ॥२४॥ आम्नायाऽभ्यसनान्यरण्यरु-
दितं वेदव्रतान्यन्वहं मेदश्छेदफलानि पूर्तविधयः सर्वं हुतं
भस्मनि ॥ तीर्थानामवगाहनानि च गजस्नानं विना यत्प-
दद्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः ॥२५॥
श्रीमन्नाम प्रोच्य नारायणाख्यं केन प्रापुर्वाञ्छितं पापि-
नोऽपि ॥ हा नः पूर्वं वाक्प्रवृत्ता न तस्मिंस्तेन प्राप्तं गर्भ-
वासादिदुःखम् ॥ २६ ॥ मज्जन्मनः फलमिदं मधुकैट-
भारे मत्प्रार्थनीय मदनुग्रह एष एव ॥ त्वद्भृत्यभृत्यपरि-
चारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ
॥२७॥ नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ॥ यं
कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगया
महे नरमहो मूका वराका वयम् ॥२८॥ मदन परिहर

स्थितिं मदीये मनसि मुकुन्दपदारविंदधाम्नि॥ हरनयन
कृशानुनाकृशोऽसि स्मरसि न चक्रपराक्रमं मुरारेः॥२९॥
तत्त्वं ब्रुवाणानि परं परस्तान्मधुक्षरन्तीव सतां फलानि॥
प्रावर्तयप्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि
॥ ३० ॥ इदं शरीरं शतसंधि जर्जरं पतत्यवश्यं परि-
णामपेशलम् ॥ किमौषधं पृच्छसि मूढ दुर्मते निरामयं
कृष्णरसायनं पिब ॥ ३१ ॥ दारा वाराकरवरसुता ते
तनूजो विरिञ्चिस्तोता वेदस्तव सुरगणा भृत्यवर्गः
प्रसादः ॥ मुक्तिर्माया जग विकलं तावकी देवकी ते
माता मित्रं बलरिपुसुतस्तत्त्वदन्यं न जाने ॥ ३२ ॥
कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्ण नमध्वंसदा कृष्णेना-
खिलशत्रवो विनिहताः कृष्णाय तस्मै नमः ॥ कृष्णा
देव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं कृष्णे
तिष्ठति विश्वमेतदखिलं हे कृष्ण रक्षस्व माम् ॥३३॥
तत्त्वं प्रसीद भगवन्कुरुमय्यनाथे विष्णो कृपां परम-
कारुणिकः खलु त्वम् ॥ संसारसागरनिमग्नमनन्त दीन-
मुद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥३४॥ नमामि नारा-
यणपादपङ्कजं करोमि नारायणपूजनं सदा ॥ वदामि
नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम्
॥३५॥ श्रीनाथ नारायण वासुदेव श्रीकृष्ण भक्तप्रिय
चक्रपाणे ॥ श्रीपद्मनाभाच्युत कैटभारे श्रीराम पद्माक्ष
हरे मुरारे ॥३६॥ अनंत वैकुण्ठ मुकुन्द कृष्ण गोविन्द

दामोदर माधवेति ॥ वक्तुं समर्थोऽपि न वक्ति कश्चिदहो
जनानां व्यसनाभिमुख्यम् ॥३७॥ ध्यायन्ति ये विष्णु-
मनन्तमव्ययं हृत्पद्ममध्ये सततं व्यवस्थितम्॥ समाहि-
तानां सतताभयप्रदं ते यांति सिद्धिं परमां तु वैष्णवीम्
॥ ३८ ॥ क्षीरसागरतरंगशीकरासारतारकितचारुमू-
र्तये भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे
नमः ॥ ३९ ॥ यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ
मित्रे द्विजन्मवरपद्मशरावभूताम् ॥ तेनाम्बुजाक्षचरणा-
म्बुजषट्पदेन राज्ञा कृता कृतिरियं कुलशेखरेण ॥४०॥
इति श्रीकुलशेखरकृतं मुकुन्दमालास्तोत्रं संपूर्णम्॥ १९॥

## अथ प्रार्थनापञ्चकम्

श्रीमते रामानुजाय नमः ॥ यतीश्वर शृणु श्रीमन्
कृपया परया तव ॥ मम विज्ञापनमिदं विलोक्य वरदं
गुरुम् ॥१॥ अनादिपापरचितामन्तःकरणनिष्ठिताम् ॥
यतीन्द्रविषये सान्द्रां विनिर्वासय वासनाम् ॥२॥ अपि
प्रार्थयमानानां पुत्रक्षेत्रादिसम्पदाम् ॥ कुरु वैराग्यमेवाग्र
हितकारिन्यतीन्द्र नः ॥ ३ ॥ यथा लक्ष्मणयोगीन्द्र
यावद्देहं प्रवर्तय ॥ ४ ॥ आमोक्षं लक्ष्मणार्य त्वत्प्रबन्ध-
परिशीलनैः ॥ कालक्षेपोऽस्तु नः सद्भिः सहवासमुपेयु-
षाम् ॥५॥ इत्येतत्सादरं विद्वान् प्रार्थनापञ्चकं पठन् ॥
प्राप्नुयात्परमां भक्तिं यतिराजपदाब्जयोः ॥ ६ ॥ इति
प्रार्थनापञ्चकं समाप्तम् ॥ २० ॥

# अथ पूर्वदिनचर्या

श्रीमते रामानुजाय नमः सौम्यजामातृयोगीन्द्रच-रणाम्बुजषट्पदम् ॥ देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम् ॥१॥ अङ्के कवेरकन्यायास्तुङ्गे भुवनमङ्गले ॥ रङ्गे धाम्नि सुखासीनं वन्दे वरवरं मुनिम् ॥२॥ मयि प्रविशति श्रीमन्मन्दिरं रङ्गशायिनः॥ पत्युः पदाम्बुजं द्रष्टुमायान्तमविदूरतः ॥३॥ सुधानिधिमिव स्वैरस्व-कृतोदग्रविग्रहम्॥ प्रसन्नार्कप्रतीकाशप्रकाशपरिवेष्टितम् ॥४॥ पार्श्वतः पाणिपद्माभ्यां परिगृह्य भवत्प्रियौ ॥ विन्यस्यन्तं शनैरंघ्री मृदुलो मेदिनीतले ॥५॥ अम्लानकोमलाकारमाताम्रविमलाम्बरम् ॥ आपीनविपुलोर-स्कमाजानुभुजभूषणम् ॥ ६ ॥ मृणालतन्तुसन्तानसं-स्थानधवलत्विषा ॥ शोभितं यज्ञसूत्रेण नाभिबिम्बसनाभिना ॥ ७ ॥ अम्भोजबीजमालाभिरभिजातभुजां-तरम् ॥ ऊर्ध्वपुण्ड्रैरुपश्लिष्टमुचितस्थानलक्षणैः ॥ ८ ॥ काश्मीरकेसरस्तोमकडारस्निग्धरोचिषा ॥ कौशेयेन समिंधानं स्कन्धमूलावलंबिना ॥ ९ ॥ मंत्ररत्नानुस-न्धानसन्ततस्फुरिताधरम्॥ तदर्थतत्त्वनिध्यानसन्नद्धपु-लकोद्गमम्॥१०॥ स्मयमानमुखाम्भोजे दयमानदृगञ्च-लम् ॥ मयि प्रसादप्रवणं मधुरोदार भाषणम् ॥११॥ आत्मलाभात्परं किञ्चिदन्यन्नास्तीति निश्चयात्॥अङ्गी-कर्तुमिव प्राप्तमकिञ्चन मिमं जनम् ॥१२॥ भवन्तमेव

नीरन्ध्रं पश्यन्वश्येन चेतसा ॥ मुने वरवरस्वामिन्मुहु
स्त्वामेव कीर्त्तयन् ॥१३॥ त्वदन्यविषयस्पर्शविमुखैर
खिलेन्द्रियैः ॥ भवेयं भवदुःखानामसह्यानामनास्पदम्
॥१४॥ परेद्युः पश्चिमे यामे यामिन्याः समुपस्थिते ॥
प्रबुद्धच शरणं गत्वा परां गुरुपरम्पराम् ॥१५॥ ध्यात्वा
रहस्यत्रितयं तत्त्वयाथात्म्यदर्पणम् ॥ परव्यूहादिका-
न्पत्युः प्रकारान्प्रणिधाय च ॥ १६ ॥ ततः प्रत्युषसि
स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः॥यतींद्रचरणद्वन्द्वप्र-
वणेनैव चेतसा ॥१७॥ अथ रङ्गनिधिं सम्यगभिगम्य
निजं प्रभुम् ॥ श्रीनिधानंशनैस्तस्य शोधयित्वा पद-
द्वयम् ॥ १८ ॥ ततस्तत्सन्निधिस्तम्भमूलभूतलभूष-
णम् ॥ प्राङ्मुखं सुखमासीनं प्रसादमधुरस्मितम् ॥१९॥
भृत्यैः प्रियाहतैकाग्रैः प्रेमपूर्वमुपासितम्॥तत्प्रार्थनानु-
सारेण संस्करान्संविधाय मे ॥ २० ॥ अनुकम्पापरी-
वाहैरभिषेचनपूर्वकम् ॥दिव्यं पदद्वयं दत्वा दीर्घं प्रण-
मतो मम ॥ २१ ॥ साक्षात्फलैकलक्ष्यत्वप्रतिपत्तिपवि-
त्रितम् ॥ मंत्ररत्नंप्रयच्छन्तं वन्दे वरवरं मुनिम् ॥२२॥
ततः सार्द्धं विनिर्गत्य भृत्यैर्नित्यानपायिभिः ॥ श्रीरङ्ग-
मङ्गलं द्रष्टुं पुरुषं भुजगेशयम् ॥२३॥ महति श्रीमति
द्वारे गोपुरं चतुराननम् ॥ प्रणिपत्यशनैरन्तः प्रविशन्तं
भजामितम् ॥ २४ ॥ देवी गोदा यतिपतिशठद्वेषिणौ
रङ्गशृंगंसेनानाथो विहगवृषभः श्रीनिधिः सिन्धुकन्या॥

भूमानीलागुरुजनवृतः पूरुषश्चेत्यमीषामग्रे नित्यं वरवरमुनेरङ्घ्रियुग्मं प्रपद्ये ॥२५॥ मङ्गलाशासनं कृत्वा तत्र तत्र यथोचितम् ॥ धाम्नस्तस्माद्विनिष्क्रम्य प्रविश्य स्वं निकेतनम् ॥२६॥ अथ श्रीशैलनाथायनाम्नि श्रीमति मण्डपे ॥ तदङ्घ्रिपङ्कजद्वन्द्वच्छायामन्यनिवासिनम् ॥ २७ ॥ तत्त्वं दिव्यप्रबन्धानां सारं संसारवैरिणाम् ॥ सरसं सरहस्यानां व्याचक्षाणं नमामि तम् ॥ २८ ॥ ततः स्वचरणाम्भोजस्पर्शसम्पन्नसौरभैः ॥ पावनैरर्थिनस्तीर्थैर्भावयन्तं भजामि तम् ॥ २९ ॥ आराध्य श्रीनिधिं पश्चादनुयागं विधाय च ॥ प्रसादपात्रं मां कृत्वा पश्यन्तं भावयामि तम् ॥३०॥ ततश्चेतः समाधाय पुरुषे पुष्करेक्षणे ॥ उत्तंसितकरद्वन्द्वमुपविष्टमुपह्वरे ॥ ३१ ॥ अब्जासनस्थमवदातसुजातमूर्तिमामीलिताक्षमनुसंहितमन्त्ररत्नम् ॥ आनम्रमौलिभिरुपासितमन्तरंगैर्नित्यं मुनिं वरवरं निभृतो भजामि ॥ ३२ ॥ ततः शुभाश्रये तस्मिन्निमग्नं निभृतं मनः ॥ यतीन्द्रप्रवणं कर्तुं यतमानं नमामि तम् ॥ ३३ ॥ इतिश्रीपूर्वदिनचर्या सम्पूर्णा ॥ २१ ॥

## अथ श्रीयतिराजविंशतिः

श्रीमते रामानुजाय नमः ॥ यः स्तुतिं यतिपतिप्रसादिनीं व्याजहार यतिराजविंशतिम् ॥ तं प्रपन्नजनचातकाम्बुदं नौमि सौम्यभवयोगिपुङ्गवम् ॥१॥ श्रीमाध-

वांघ्रिजलजद्वयनित्यसेवाप्रेमाविलाशयपराङ्कुशपाद-
भक्तम् ॥ कामादिदोषहरमात्मपदाश्रितानां रामानुजं य-
तिपतिं प्रणमामि मूर्ध्ना ॥२॥ श्रीरङ्गराजचरणाम्बुजरा-
जहंसं श्रीमत्पराङ्कुशपदाम्बुजभृङ्गराजम् ॥ श्रीभट्टना-
थपरकालमुखाब्जमित्रं श्रीवत्सचिह्नशरणं यतिराज-
मीडे ॥३॥ वाचा यतीन्द्र मनसा वपुषा च युष्मत्पा-
दारविन्दयुगलं भजतां गुरूणाम् ॥ कूराधिनाथ कुरुके-
शमुखाद्यपुंसां पादानुचिन्तनपरः सततं भवेयम् ॥४॥
नित्यं यतीन्द्र तव दिव्यवपुःस्मृतौ मे सक्तं मनो भवतु
वाग्गुणकीर्त्तनेऽसौ ॥ कृत्यं च दास्यकरणं तु करद्वयस्य
वृत्त्यन्तरेऽस्तु विमुखं करणत्रयं च ॥ ५ ॥ अष्टाक्षरा-
ख्यमनुराजपदत्रयार्थनिष्ठां ममात्र वितराद्य यतीन्द्र
नाथ ॥ शिष्टाग्रगण्यजनसेव्यभवत्पदाब्जे हृष्टाऽस्तु
नित्यमनुभूय ममास्य बुद्धिः ॥ ६ ॥ अल्पापि मे न
भवदीयपदाब्जभक्तिः शब्दादिभोगरुचिरन्वहमेधतेह ॥
मत्पापमेव हि निदानममुष्य नान्यत्तद्वारयार्य यतिराज
दयैकसिन्धो ॥७॥ वृत्त्या पशुर्नरवपुस्त्वहमीदृशोऽपि
श्रुत्यादिसिद्धनिखिलात्मगुणाश्रयोऽयम् ॥ इत्यादरेण
कृतिनोऽपि मिथः प्रवक्तुमद्यापि वञ्चनपरोऽत्र यतीन्द्र
वर्ते ॥८॥ दुःखावहोऽहमनिशं तव दुष्टचेष्टः शब्दादिभोग-
निरतः शरणागताख्यः ॥ त्वत्पादभक्त इव शिष्टजनौघ-
मध्ये मिथ्या चरामि यतिराज ततोऽस्मि मूर्खः ॥९॥

नित्यं त्वहं परिभवामि गुरुं च मन्त्रं तद्देवतामपि न किंचिदहो बिभेमि ॥ इत्थं शठोऽप्यशठवद्भवदीयसन्धे र्हृष्टश्चरामि यतिराज ततोऽस्मि मूर्खः ॥१०॥ हा हन्त हन्त मनसा क्रियया च वाचा योऽहंचरामि सततं त्रिविधापचारान् ॥ सोऽहं तवाऽप्रियकरः प्रियकृद्वदेव कालं नयामि यतिराज ततोऽस्मि मूर्खः ॥ ११ ॥ पापे कृते यदि न घ्नन्ति भयानुतापलज्जाः पुनः करणमस्य कथं घटेत ॥ मोहेन मे न भवतीह भयादिलेशस्तस्मात्पुनः पुनरघं यतिराज कुर्वे ॥१२॥ अन्तर्बहिः सकलवस्तुषु सन्तमीशमंधः पुरः स्थितमिवाहमवीक्षमाणः ॥ कंदर्पवश्यहृदयः सततंभवामि हन्त त्वदग्रगमनस्य यतीन्द्र नार्हः ॥ १३ ॥ तापत्रयीजनितदुःखनिपातिनोऽपि देहस्थितौ मम रुचिस्तु न तन्निवृत्तौ ॥ एतस्य कारणमहो मम पापमेव नाथ त्वमेव हर तद्यतिराज शीघ्रम्॥१४॥वाचामगोचर महागुण देशिकाग्र्य कूराधिनाथ कथिताऽखिलनैच्यपात्रम्॥एषोऽहमेव न पुनर्जगतीदृशस्तद्रामानुजार्य करुणैव तु मद्गतिस्ते ॥ १५ ॥ शुद्धात्मयामुनगुरूत्तम कूरनाथ भट्टाख्यदेशिकवरोक्तसमस्तनच्यम् ॥ अद्याऽस्त्यसंकुचितमेव मयीह लोके तस्माद्यतीन्द्र करुणैव तु मद्गतिस्ते ॥ १६ ॥ शब्दादिभोगविषया रुचिरस्मदीया नष्टा भवत्विह भवद्दयया यतीन्द्र॥त्वद्दासदासगणनाचरमावधौ यस्तद्दा-

सत्तैकरसताऽविरता ममास्तु ॥ १७ ॥ श्रुत्यग्रवेद्यनिजदिव्यगुणस्वरूपः प्रत्यक्षतामुपगतस्त्विह रंगराजः ॥ वश्यः सदा भवति ते यतिराज तस्माच्छक्तः स्वकीयजनपापविमोचने त्वम् ॥१८॥ कालत्रयेऽपि करणत्रयनिर्मितातिपापक्रियस्य शरणं भगवत्क्षमैव ॥ सा च त्वयैव कमलारमणेऽर्थिता यत्क्षेमः स एव हि यतींद्र भवच्छ्रितानाम् ॥१९॥ श्रीमन् यतीन्द्र तवदिव्य पदाब्जसेवां श्रीशैलनाथकरुणापरिणामदत्तम् ॥ तामन्वहं मम विवर्द्धय नाथ तस्याः कामं विरुद्धमखिलं च निवर्त्तयत्वम् ॥२०॥ विज्ञापनं यदिदमद्यतु मामकीनमंगीकुरुष्व यतिराज दयांबुराशे॥अज्ञोऽयमात्मगुणलेशविवर्जितश्च तस्मादनन्यशरणो भवतीति मत्वा॥२१॥ इति यतिकुलधुर्यमेधमानैः श्रुतिमधुरैरुदितै प्रहर्षयन्तम् ॥ वरवरमुनिमेव चिन्तयन्ती मतिरियमेति निरत्ययं प्रसादम् ॥ २२ ॥ इति श्रीयतिराजविंशतिः सम्पूर्णा ॥ २२ ॥

## अथ उत्तरदिनचर्या

श्रीमते रामानुजाय नमः ॥ अथ गोष्ठीं गरिष्ठानामधिष्ठाय सुमेधसाम् ॥ वाक्यालंकृतिवाक्यानि व्याख्यातारं नमामि तम् ॥१॥ सायन्तनं ततः कृत्वा सम्यगाराधनं हरेः स्वैरालापैः शुभैः श्रोतॄन् नंदयन्तं नमामि तम् ॥ २ ॥ ततः कनकपर्यंके तरुणद्युमणि-

द्युतौ ॥ विशालविगलश्लक्ष्णतुङ्गतूलासनोज्ज्वले ॥३॥ समग्रसौरभोद्गारनिरन्तरदिगन्तरे॥ सोपधाने सुखासीनं सुकुमारे वरासने ॥४॥ उन्मीलत्पद्मगर्भद्युतितलमुपरि क्षीरसङ्घातगौरं राकाचन्द्रप्रकाशप्रचुरनखमणिद्योतविद्योतमानम् ॥ अंगुल्यग्रेषु किञ्चिन्नतमतिमृदुलं सौम्यजामातृयोगी दिव्यं त्वत्पादयुग्मं दिशतु शिरसि मेदेशिकेन्द्रो दयालुः ॥५॥त्वं मे बन्धुस्त्वमसि जनकस्त्वं सखा देशिकस्त्वं विद्या वृत्तं सुकृतमतुलं वित्तमप्युत्तमं त्वम् ॥ आत्मा शेषी भवसि भगवन्नान्तरः शासिता त्वं यद्वा सर्वं वरवरमुने यद्यदात्मानुरूपम् ॥६॥ अग्रे पश्चादुपरि परितो भूतलं पार्श्वतो मे मौलौ वक्त्रे वपुषि सकले मानसाम्भोरुहे च ॥ दर्शं दर्शं वरवरमुने दिव्यमङ्घ्रिद्वयं ते नित्यं मज्जन्नमृतजलधौ निस्तरेयं भवाब्धिम्॥ ७॥कर्माधीनेवपुषिकुमतिः कल्पयन्नात्मभावं दुःखे मग्नः किमपि सुचिरं दूयते जन्तुरेषः॥ सर्वं त्यक्त्वा वरवरमुने संप्रति त्वत्प्रसादाद्दिव्यं प्राप्तं तव पदयुगं देहि मे सुप्रभातम् ॥८॥ या या वृत्तिर्मनसि मम साजायतां संस्मृतिस्ते यो यो जल्पः स भवतु विभो नामसंकीर्तनं ते ॥ या या चेष्टा वपुषि भगवन् सा भवेद्वन्दनं ते सर्वं भूयाद्वरवरमुने सम्यगाराधनं ते ॥९॥ अपगतमदमानैरन्तिमोपायनिष्ठैरधिगतपरमार्थैरर्थकामानपेक्षैः॥ निखिलजनसुहृद्भिर्निर्जितक्रोधलोभैर्वरवरमुनिभृत्यैरस्तु मे

नित्ययोगः ॥१०॥ इति स्तुतिनिबन्धेन सूचितस्वमनीषितान् ॥ भृत्यान्प्रेमार्द्रया दृष्ट्या सिञ्चन्तं चिन्तयामि तम् ॥११॥ अथ भृत्याननुज्ञाप्य कृत्वा चेतः शुभाश्रये॥ शयनीयं परिष्कृत्य शयानं संस्मरामि तम् ॥ १२ ॥ दिनचर्य्यामिमां दिव्यां सौम्यजामातृयोगिनः ॥ भक्त्या नित्यमनुध्यायन्प्राप्नोति परमं पदम् ॥१३॥ प्रपद्ये पदपद्मानि परमप्रेमसम्पदाम् ॥ सौम्यजामातृयोगीन्द्रचरणैकजुषां सताम् ॥१४॥ सम्पत्स्वरूपानुगुणैव यस्मिन् सर्वोत्तरो यत्र मनः प्रसादः ॥ सद्भिः समं दैवतमेव देशं प्राप्यं प्रपद्ये भवदंघ्रिमूलम् ॥१५॥ यन्मूलमाश्वयुजि मास्यवतारमूलं कान्तोपयंतुयमिनः करुणैकसिन्धोः ॥ आसीदसत्सु गणितस्य ममापि सत्तामूलं तदेव जगदभ्युदयैकमूलम् ॥१६॥ न चेद्रामानुजेत्येषा चतुरा चतुरक्षरी ॥ कामवस्थां प्रपद्यन्ते जन्तवो हन्त मादृशाः ॥१७॥ पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च ॥ श्रीमानाविरभूद्भूमौ रामानुजदिवाकरः ॥ १८ ॥ तृणीकृतविरञ्च्यादिनिरंकुशविभूतयः ॥ रामानुजपदाम्भोजसमाश्रयणशालिनः ॥ १९ ॥ इति श्रीउत्तरदिनचर्या सम्पूर्णा ॥ २३ ॥

## अथ श्रीगुणरत्नकोशः

श्रीमते रामानुजाय नमः ॥ श्रीपराशरभट्टार्य्यः श्रीरंगेशपुरोहितः ॥ श्रीवत्साङ्कसुतां श्रीमान् श्रेयसे

मेऽस्तु भूयसे ॥ श्रियः समस्तचिदचिद्विधानव्यसनं हरेः॥
अङ्गीकारिभिरालोकैः सार्थयन्त्यै कृतोञ्जऽलिः ॥ १ ॥
उल्लासपल्लवितपालितसप्तलोकीनिर्वाहकोरकितनेम कटा
क्षलीलाम् ॥ श्रीरङ्गहर्म्यतलमङ्गलदीपरेखां श्रीरंगराज-
महिषीं श्रियमाश्रयामः ॥२॥ अनुकलतनुकाण्डालिङ्ग-
नारम्भशुम्भत्प्रतिदिशभुजशाखश्रीसखानोकहार्द्धैः॥स्त
ननयनगुलुच्छस्फारपुष्पद्विरेफा रचयतु मयि लक्ष्मी-
कल्पवल्ली कटाक्षान् ॥३॥ यद्भ्रूभङ्गाःप्रमाणं स्थिरच-
रचनातारतम्ये मुरारेर्वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि
यत्पादचिन्हैस्तरन्ति॥भोगोपोद्घातकेलीचुलकितभग-
वद्वैश्वरूप्यानुभावा सा नः श्रीरास्तृणीताममृतलहरिधी-
लंघनीयैरपाङ्गैः ॥ ४ ॥ यद्यावत्तव वैभवं तदुचि-
तस्तोत्राय दूरे स्पृहा स्तोतुं के वयमित्यदश्च जगृहुः
प्राञ्चो विरिञ्च्यादयः ॥ अप्येवं तव देवि वाङ्मनसयो
र्भाषानभिज्ञं पदं का वाचः प्रयतामहे कवयितुं स्वस्ति
प्रशस्त्यै गिराम् ॥५॥ स्तोतारं तमुशन्ति देवि कवयो
यो विस्तृणीते गुणान् स्तोतव्यस्य ततश्च ते स्तुतिधुरा
मय्येव विश्राम्यति॥ यस्मादस्मदमर्षणीयभणितिस्वी-
कारतस्ते गुणाः क्षान्त्यौदार्यदयादयो भगवति स्वां
प्रस्तुवीरन् प्रथाम् ॥६॥ सूक्तिं समग्रयतु नः स्वयमेव
लक्ष्मीः श्रीरङ्गराजमहिषी मधुरैः कटाक्षैः ॥ वैदग्ध्यवर्ण-
गुणगुम्फनगौरवैर्यां कण्डूलकर्णकुहराः कवयो धयन्ति

॥७॥ अनाघ्रातावद्यं बहुगुणपरीणाहि मनसो दुहानं सौहार्दं परिचितमिवाथापि गहनम्॥ पदानां सौभ्रात्रादनिमिषनिषेव्यं श्रवणयोस्त्वमेव श्रीमद्व्यं बहुमुखय वाणीविलसितम् ॥८॥ श्रियः श्रीश्रीरंगेशय तव च हृद्यां भगवतीं श्रियं त्वत्तोऽप्युच्चैर्वयमिह भणामः शृणुतराम्॥ हशौते भूयास्तां सुखतरलतारे श्रवणतः पुनर्हर्षोत्कर्षात् स्फुटतु भुजयो कञ्चुकशतम् ॥९॥ देवि श्रुतिं भगवतीं प्रथमे पुमांसस्त्वत्सद्गुणौघमणिकोशगृहं गृणंति॥ तद्वारपाटनपटूनि च सेतिहाससंतर्कणस्मृति पुराणपुरः सराणि ॥ १० ॥ आहुर्वेदा न मानं कतिचन कतिचाराजकं विश्वमेतद्राजन्वत्केचिदीशं गुणिनम पि गुणैस्तं दरिद्राणमन्ये॥ भिक्षावन्ये सुराजम्भवमिति च जडास्ते तलातल्पकाष्ठुर्यैं ते श्रीरङ्गहर्म्याङ्गणकनकलते न क्षणं लक्ष्यमासन् ॥११॥ मनसिविलसिताक्ष्णा भक्तिसिद्धाञ्जनेन श्रुतिशिरसि निगूढ लक्ष्मि ते वीक्षमाणाः॥ निधिमिव महिमानं भुञ्जते येऽपि धन्या ननु भगवति दैवीं सम्पदं तेऽभिजाताः ॥१२॥ अस्येशाना जगत इति ते धीमहे यां समृद्धिं श्रीः श्रीसूक्तं बहुमुखयते तां च शाखानुशाखम् ॥ ईष्टे कश्चिज्जगत इति यः पौरुषे सूक्त उक्तस्तं च त्वत्कम्पतिमधिजगावुत्तरश्चानुवाकः ॥१३॥ उद्वाहुस्त्वामुपनिषदसावाहनैकां नियन्त्रीं श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे॥ स्मर्तारोऽस्मज्जननियतमे सेतिहासैः पुराणै-

र्निन्युर्वेदानपि च ततमे त्वन्महिम्नि प्रमाणम् ॥१४॥
आकुग्रामनियामकादपि विभोरासर्वनिर्वाहकादैश्वर्यय-
दिहोत्तरोत्तरगुणं श्रीरङ्गभर्तुः प्रिये॥ तुङ्गं मङ्गलमुज्ज्वलं
गरिमवत् पुण्यंपुनःपावनं धन्यं यत्तददश्च वीक्षणभुवस्ते
पञ्चषो विप्रुषः ॥ १५ ॥ एको मुक्तातपत्रप्रचुरमणिघण
त्कारिमौलिर्मनुष्योद्दप्यद्दन्तावलस्थो न गणयति नतान्
यत् क्षणं क्षोणिपालान्॥ यत्तस्मै तिष्ठतेऽन्यः कृपणम-
शरणो दर्शयन् दन्तपंक्तिं तत्ते श्रीरङ्गराजप्रणयिनि
नयनोदञ्चितन्यञ्चिताभ्याम् ॥१६॥ रतिर्मतिसरस्वती-
धृतिसमृद्धिसिद्धिश्रियः सुधासखि यतोमुखं विचलिषे-
त्तव भ्रूलता॥ ततोमुखमथेंदिरे बहुमुखीमहंपूर्विकां
विगाह्य च वशंवदाः परिवहन्ति कूलंकषाः ॥ १७ ॥
सहस्थिर परित्रसव्रजविरिञ्चिनाऽकिंचनैरनोकहबृहस्प-
तिप्रबलविक्लवप्रक्रियम्॥ इदं सदसदात्मनां निखिलमेव
निम्नोन्नतं कटाक्षतदुपेक्षयोस्तव हि लक्ष्मि तत्ताण्डवम्
॥ १८ ॥ काले शंसति योग्यतां चिदचितोरन्योन्य-
मालिङ्गतो भूताहंकृतिबुद्धिपञ्चकरणीस्वान्तप्रवृत्तीन्द्रि-
यैः ॥ अण्डानावरणैः सहस्रमकरोत्तान् भूर्भुवः स्वर्वतः
श्रीरङ्गेश्वरदेति ते विहृतये सङ्कल्पमानः प्रियः ॥१९॥
शब्दादीन् विषयान् प्रदर्श्य विभवं विस्मार्य दास्यात्मकं
वैष्णव्यागुणमायया्ऽऽत्मनिवहान् विप्लाव्य पूर्वःपुमान्।
पुंसा पण्यवधूविडम्बिवपुषा धूर्त्तानिवायासयन् श्रीर-

ङ्गेश्वरि कल्पते तव परीहासात्मने केलये ॥ २० ॥
यद्दूरे मनसो यदेव तमसः पारेयदत्यद्भुतं यत्कालादपचे
लिमं सुरपुरी यद्गच्छतो दुर्गतिः ॥ सायुज्यस्य यदेव
सूतिरथवा यद्दुर्ग्रहं यद्गिरां तद्विष्णोः परमं पदं तव कृते
मातः समाम्नासिषुः ॥ २१ ॥ हेलायामखिलं चराचर-
मिदं भोगे विभूतिः परा पुण्यास्ते परिचारकर्मणि सदा
पश्यन्ति ये सूरयः ॥ श्रीरङ्गेश्वरदेवि केवलकृपानिर्वाह्य-
वर्गं वयं शेषित्वे परमः पुमान् परिकरा ह्येते तव स्फारणे
॥ २२ ॥ आज्ञानुग्रहभीमकोमलपुरीफालाफलं भेजुषां
यायोध्येत्यपराजितेति विदिता नाकं परेण स्थिता ॥
भावैरद्भुतभोगभूमगहनैः सान्द्रा सुधास्यन्दिभिःश्रीरंगे-
श्वरगेहलक्ष्मि युवयोस्तां राजधानीं विदुः॥२३॥ तस्यां च
त्वत्कृपावन्निरवधिजनताविश्रमार्हावकाशं संकीर्णंदास्य
तृष्णाकलितपरिकरैः पुम्भिरानन्दनिघ्नैः ॥ स्नेहादस्था-
नरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैरानन्दैकार्णवं
श्रीर्भगवति युवयोराहुरस्थानरत्नम् ॥ २४ ॥ तत्र
स्रक्स्पर्शगन्धं स्फुरदुपरिफणारत्नरोचिर्वितानंविस्तीर्या
नन्तभोगं तदुपरि नयता विश्वमेकाधिपत्यम् ॥ तैस्तैः
कांतेनशांतादितगुणविभवैर्हृतात्वामसंख्यैरन्योऽन्या-
द्वैतनिष्ठाघनरसगहनान् देवि बध्नासि भोगान् ॥२५॥
भोग्यावामपि नान्तरीयकतया पुष्पाङ्गरागैःसमं निर्वृत्त
प्रणयातिवाहनविधौ नीताः परीवाहताम्॥देवि त्वामनु-

नीलया सह महीदेव्यः सहस्रं तथा याभिस्त्वं स्तनबाहु-
दृष्टिभिरिव स्वाभि प्रियं श्लाघसे ॥२६॥ ते साध्याः
संति देवा जननिगुणवपुर्वेषवृत्तस्वरूपैर्भोगैर्वा निर्वि-
शेषाः सवयस इव ये नित्यनिर्दोषगंधाः॥हे श्री श्रीरंग-
भर्तुस्तव च पदपरीचारवृत्त्यै सदापि प्रेमप्रद्राण भावावि-
लहृदयहठात्कारकैङ्कर्य्य भोगाः ॥२७॥ स्वरूपं स्वातंत्र्यं
भगवत इदं चंद्रवदने त्वदाश्लेषोत्कर्षाद्भवति खलु-
निष्कर्षसमये ॥ त्वमासीर्मातः श्रीः कमितुरिदमित्थं
त्वविभवस्तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि
॥२८॥ तव स्पर्शादीशं स्पृशति कमले मङ्गलपदं तवेदं
नोपाधेरूषनिपतितं श्रीरसि यतः ॥ प्रसूनं पुष्यन्ती-
मपि परिमलर्द्धिं जिगदिषुर्नचैवं त्वा देवंस्वदत इति
कश्चित् कवयते ॥२९॥ अपांगा भूयांसो यदुपरि परं
ब्रह्म तदभूदमी यत्र द्वित्राः स च शतमखादिस्तदध-
राक् ॥ अतः श्रीराम्नायस्तदुभयमुशंस्त्वां प्रणिजगौ
प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम् ॥३०॥
स्वतः श्रीस्त्वं विष्णोः स्वमसि तत एवैष भगवांस्त्व-
दायत्तर्द्धित्वेऽप्यभवदपराधीनविभवः ॥ स्वयादीप्त्या
रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति
च न चान्याहितगुणम् ॥३१॥ प्रशकनबलज्योतिज्ञाने-
श्वरीविजयप्रथाप्रणतवरणप्रेमक्षेमंकरत्वपुरः सरा॥ अपि
परिमलः कांतिर्लावण्यमरोचिरितीन्दिरे तव भगवत-
श्चैते साधारणा गुणराशयः ॥ ३२ ॥ अन्येऽपि यौवन-

मुखा युवयोः समानाः श्रीरंगमंगलविजृम्भणवैजयंति॥ तस्मिंस्तव त्वयि च तस्य परस्परेण संस्तीर्णदर्पणगइव प्रचुरं स्वदन्ते ॥ ३३ ॥ युवत्वादौ तुल्येऽप्यपरवशता-शत्रुशमनस्थिरत्वादीन् कृत्वा भगवति गुणान् पुंस्त्व-सुलभान् ॥ त्वयि स्त्रीत्वैकांतान् ऋदिमपतिपारार्थ्य-करुणाक्षमादीन्वा भोक्तुं भवति युवयोरात्मनि भिदा ॥ ३४ ॥ घनकनकद्युती युवदशामपि मुग्धदशां युव-तरुणत्वयोरुचितमाभरणादि परम् ॥ ध्रुवमसमानदेश-विनिवेशिविभज्यहरौ त्वयि च कुशेशयोदरविहारिणि निर्विशसि॥३५॥अंगं ते मृदुशीतमुग्धमधुरोदारैर्गुणैर्गु-म्फतःक्षीराब्धेःकिमृजुषतामुपगतामन्येमहार्घास्ततः ॥ इंदुः कल्पलताः सुधामधुमखा इत्याविलां वर्णनां श्रीरंगेश्वरि शान्तकृत्रिमकथं दिव्यं वपुर्नार्हति ॥३६॥ प्रणमदनुविधित्सावासनानम्रमग्रे प्रणतिपरिचिचीषा-कुञ्चितं पार्श्वकेन ॥ कनकनिकषचञ्चच्चम्पकस्रक्संस-मानप्रवरमिदमुदारं वर्ष्म वाचामभूमिः ॥ ३७ ॥ एकं न्यञ्च नतिक्षमं मम परं चाकुञ्च्य पादाम्बुजं मध्ये-विष्टरपुण्डरीकमभयं विन्यस्य हस्ताम्बुजम् ॥ त्वां पश्येसनिषेदुषीं प्रतिकलं कारुण्यकूलङ्कषस्फारापांग तरंगमम्ब मधुरं मुग्धं मुखं बिभ्रतीम् ॥३८॥ सुरभित-निगमांतं वन्दिषीयेंदिरायास्तव कमलपलाशप्रक्रियं पादयुग्मम् ॥ वहति यदुपमर्दैर्वैजयन्तीहिमाम्भः प्लुति

भिरिव नवत्वं कांतबाह्वन्तराले ॥ ३९ ॥ त्वत्स्वीकार-
कलावलेपकलुषा राज्ञां दृशो दुर्वचा नित्यं त्वन्मधु-
पानमत्तमधुपश्रीनिर्भराभ्यां पतिम् ॥ दृग्भ्यामेव हि
पुण्डरीकनयनं वेदोविदामासते साक्षाल्लक्ष्मि तवावलोक-
विभवः काक्का कया वर्ण्यते ॥ ४० ॥ आनन्दात्मभि-
रीशमज्जनमदक्षीबालसैरागलप्रेमार्द्रैरपिकूलमुद्वहकृपास
म्प्लाविताऽस्मादृशैः ॥ पद्मे ते प्रतिबिंदुबद्धकलिकब्रह्मादि-
विष्कम्भकैरैश्वर्योद्गमगद्गदैरशरणं मां पालयालोकितैः
॥ ४१ ॥ पादारुन्तुदमेव पङ्कजरजश्चेटीभृशालोकितैः
रंगम्लानिरथाम्ब साहसविधौ लीलारविंदग्रहः ॥ डोला
ते वनमालया हरिभुजे हा कष्टशब्दास्पदं केन श्रीर-
तिकोमला तनुरियं वाचां विमर्दक्षमा ॥ ४२ ॥ आम-
र्यादमकण्टकं स्तनयुगं नाद्यापि नालोकितभ्रूभेदस्मित-
विभ्रमा जहति वा नैसर्गिकत्वायशः ॥ सूते शैशवयौ-
वनव्यतिकरो गात्रेषु ते सौरभं भोगस्रोतसि कान्तदे-
शिककरग्राहेण गाहक्षमः ॥ ४३ ॥ आमोदाद्भुतशा-
लियौवनदशाव्याकोचमम्लानिमत्सौंदर्यामृतसेकशीत-
लमिदं लावण्यसूत्रार्पितम्॥श्रीरङ्गेश्वरिकोमलाङ्गसु-
मनस्सन्दर्भणं देवि ते कान्तारैः प्रतियत्नमर्हतिकविं
धिङ्मामकाण्डाकुलम् ॥ ४४ ॥ मर्मस्पृशोरसशि-
राव्यतिविद्धचवृत्तेः कान्तोपभोगललितै र्लुलिताङ्गय-
ष्टिः ॥ पुष्पावलीव रसिकभ्रमरोपभुक्ता त्वं देवि नित्य-

मभिनन्दयसे मुकुन्दम् ॥४५॥ कनकरसनामुक्ताटङ्क-हारललाटिकामणिसरतुलाकोटिप्रायैर्जनार्दनजीविके ॥ प्रकृतिमधुरं गात्रं जागर्ति मुग्धविभूषणैर्वलयशकलैर्दुग्ध पुष्पैश्च कल्पलता यथा ॥ ४६ ॥ सामान्यभोग्यमपि कौस्तुभवैजयन्तीपञ्चायुधादि रमणः स्वयमेव बिभ्रत् ॥ तद्भारखेदमिवते परिहर्तुकामः श्रीरंगधाममणिमञ्जरिगा-हते त्वाम् ॥४७॥ यदि मनुजतिरश्चां लीलया तुल्यवृत्ते रनुजनुरनुरूपां देवि नावातरिष्यः ॥ असरसमभविष्य-न्नर्म नाथस्य मातर्दरदलदरविन्दोदन्तकान्तायताक्षी ॥४८॥ स्खलितकटकमाल्यैर्दोर्भिरब्धि मुरारेर्भगवति दधिमाथं मथ्नतः श्रांतिशान्त्यै ॥ भ्रमदमृततरंगावर्ततः प्रादुरासीः स्मितनयनसुधाभिः सिञ्चती चन्द्रिकेव४९॥ मातर्मैथिल राक्षसीस्त्वयि तदैवार्द्रापराधास्त्वया रक्ष-न्त्या पवनात्मजाल्लघुतरा रामस्यगोष्ठी कृता ॥ काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः सा नः सान्द्र-महागसः सुखयतु क्षान्तिस्तवाकस्मिकी ॥५०॥ मात-र्लक्ष्मियथैव मैथिलजनस्तेनाध्वना ते वयं त्वद्दास्यैकर-साभिमानसुभगैर्भावैरिहामुत्र च ॥ जामाता दयितस्त-वेति भवतीसम्बन्धदृष्ट्या हरिं पश्येम प्रतियाम याम च परीचारान् प्रहृष्येम च ॥ ५१ ॥ पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने हितःस्रोतोवृत्त्या भवति च कदाचित् कलुषधीः ॥ किमेतन्निर्दोषः क इह जग-

तीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि
नः ॥५२॥ नेतुर्नित्यसहायिनी जननि नस्त्रातुं त्वमत्रा-
गता लोके त्वन्महिमावबोधबधिरे प्राप्ता विमर्दं बहु ॥
क्लिष्टं ग्रावसुमालतीमृदुपदं विश्लिष्य वासो वने जातो
धिक्करुणां धिगस्तु युवयोः स्वातन्त्र्यप्रत्यंकुशम् ॥५३॥
अधिशयितवानब्धिं नाथो ममंथ बबंध तं हरधनुरसौ
वल्लीभञ्जं बभञ्ज च मैथिलि ॥ अपि दशमुखं लूत्वा
रक्षःकबंधमनर्त्तयत् किमिव न पतिः कर्त्ता त्वच्चाटुचुंचु-
मनोरथः ॥५४॥ दशशतपाणिपादवदनाक्षिमुखैरखिलै-
रपि निजवैश्वरूप्यविभवैरनुषगुणैः ॥ अवतरणैरतैश्च
रसयन् कमिता कमले क्व च नहि विभ्रमभ्रमिमुखे
विनिमज्जति ते ॥५५॥ जननभवनप्रीत्या दुग्धार्णवं बहु
मन्यसे जननि दयितप्रेम्णासि पुष्णासि तत्परमं पदम् ॥
उदधिपरव्योम्नोर्विस्मृत्य मादृशरक्षणंक्षममिति धिया
भूयः श्रीरङ्गधामनि मोदसे ॥५६॥ औदार्यकारुणिक-
ताश्रितवत्सलत्वं पूर्वेषु सर्वमतिशायितमत्र मातः ॥
श्रीरङ्गधाम्नि यदुतान्यदुदाहरन्तिसीतावतारमुखमेतद-
मुष्य योग्यम् ॥ ५७ ॥ ऐश्वर्यमक्षरगतिं परमं पदं वा
कस्मै चिदञ्जलिभरं वहते वितीर्य ॥ अस्मै न किंचिदु-
चितं कृतमित्यथांब त्वं लज्जसे कथय कोऽयमुदारभावः
॥५८॥ ज्ञानक्रियाभजनसम्पदकिञ्चनोऽहमिच्छाधिका-
रशकनानुशयानभिज्ञः ॥ आगांसि देवि युवयोरपि

दुःसहानि बध्नामि मूर्खचरितस्तव दुर्भरोस्मि ॥ ५९ ॥ इत्युक्तिकैतवशतेनविडम्बयामि तानम्ब सत्यवचसःपुरुषान् पुराणान् ॥ यद्वा न मे भुजबलं तव पादपद्मलाभे त्वमेव शरणं विधितः कृतासि ॥ ६० ॥ श्रीरंगे शरदां शतं सह सुहृद्वर्गेण निष्कण्टकं निर्दुःखंससुखं च दास्यरसिकां भुक्त्वा समृद्धिं पराम् ॥ युष्मत्पादसरोरुहान्तररजःस्याम त्वमम्बा पिता सर्वं च त्वमपि त्वमेव भवतः स्वीकुर्वकस्मात् कृपाम् ॥ ६१ ॥ इति श्रीपराशरभट्टारकैर्विरचितं श्रीगुणरत्नकोशस्तोत्रं समाप्तम् ॥ २४ ॥

## श्रीयतिराजसप्ततिः

श्रीमते रामानुजाय नमः ॥ श्रीमान्वेंकटनाथार्य्यः कवितार्किककेसरी ॥ वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥ कमप्याद्यं गुरुं वन्दे कमलागृहमेधिनम् ॥ प्रवक्ता च्छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम् ॥ १ ॥ सहधर्मचरीं शौरेः संमंत्रितजगद्धिताम् ॥ अनुग्रहमयीं वन्दे नित्यमज्ञाननिग्रहाम् ॥२॥ वन्दे वैकुण्ठसेनान्यं देवं सूत्रवतीसखम् ॥ यद्वेत्रशिखरस्पन्दे विश्वमेतद्व्यवस्थितम् ॥३॥ यस्य सारस्वतं स्रोतो बकुलामोदवासितम् ॥ श्रुतीनां विश्रमायाऽलं शठारिं तमुपास्महे ॥४॥ नाथेन मुनिना तेन भवेयं नाथवानहम् ॥ यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम् ॥ ५ ॥ नमस्याम्यरविंदाक्षं नाथभावे व्यवस्थितम् ॥ शुद्धसत्त्वमयं

शौरेरवतारमिवापरम् ॥ ६ ॥ अनुज्झितक्षमायोगमपु-
ण्यजनबाधकम् ॥ अस्पृष्टमदरागं तं रामं तुर्यमुपास्महे
॥ ७ ॥ विगाहे यामुनं तीर्थं साधुवृन्दावने स्थितम् ॥
निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादरः ॥ ८ ॥ दया-
निघ्नं यतींद्रस्य देशिक पूर्णमाश्रये ॥ येन विश्वसृजो
विष्णोरपूर्यत मनोरथः ॥ ९ ॥ प्रणामं लक्ष्मणमुनिः
प्रतिगृह्णातु मामकम् ॥ प्रसाधयति यत्सूक्तिः स्वाधीन-
पतिकां श्रुतिम् ॥ १० ॥ उपवीतिनमूर्ध्वपुंड्रवन्तं
त्रिजगत्पुण्यफलं त्रिदंडहस्तम् ॥ शरणागतसार्थवाहमीडे
शिखया शेखरिणं पतिं यतीनाम् ॥ ११ ॥ प्रथयन्-
विमतेषु तीक्ष्णभावं प्रभुरस्मत्परिरक्षणे यतीन्द्रः ॥ अपृ-
थक्प्रतिपन्नयन्मयत्वैर्ववृधे पञ्चभिरायुधैर्मुरारेः ॥१२॥
शमितोदयशंकरादिगर्वः स्वबलादुद्धृतयादवप्रकाशः ॥
अवरोपितवान् श्रुतेरपार्थान्ननुरामावरजः स एष भूपः
॥ १३ ॥ अबहुश्रुतसम्भवं श्रुतीनाञ्जरतीनामयथायथ-
प्रचारम् ॥ विनिवर्तयितुं यतीश्वरोक्तिर्विदधे ताः स्थिर-
नीतिपञ्जरस्थाः ॥ १४ ॥ अमुना तपनातिशायिभूम्ना
यतिराजेन निबद्धनायकश्रीः ॥ महती गुरुपंक्तिहारय-
ष्टिर्विबुधानां हृदयङ्गमां विभाति ॥ १५ ॥ अलूनप
क्षस्य यतिक्षमाभृतो विभाति वंशे हरितत्त्वमक्षतम् ॥
यदुद्भवाः शुद्धसुवृत्तशीतला भवंति मुक्तामयभूषणं
भुवः ॥ १६ ॥ अनपायिविष्णुपदसंश्रयं भजे कलया कया

विकलयाप्यनुज्झितम् ॥ अकलंकयोगमजडाशये
यतिराजचन्द्रमुपरागदूरगम् ॥ १७॥अधिगम्यसम्यगन-
घाः सुमेधसो यतिचक्रवर्तिपदपद्मपत्तनम् ॥हरिभक्तिदा
स्यरसिकाः परस्परं क्रयविक्रयार्हदशयासमिन्धते॥१८॥
परुषातिवादपरवादपैशुनप्रभृतिप्रभूतपतनीयपंकिला ॥
स्वदते ममाद्य सुभगा सरस्वती यतिराजकीर्तिकतकैर्वि-
शोधिता ॥ १९ ॥ अनुकल्पभूतमुरभित्पदं सताम-
जहत्त्रिवर्गमपवर्गवैभवम् ॥ चलचित्तवृत्तिविनिवर्तनौषधं
शरणं यतीन्द्रचरणं वृणीमहे ॥२०॥ श्वसितावधूतपर-
वादिवैभवा निगमान्तनीतिजलधेस्तलस्पृशः ॥ प्रति-
पादयन्ति गतिमापवर्गिकीं यतिसार्वभौमपदसात्कृता-
शयाः ॥ २१ ॥ मूले निविश्य महतां निगमद्रुमाणां
मुष्णन्प्रतारकभयं धृतनैकदण्डः ॥ रंगेशभक्तजनमान-
सराजहंसो रामानुजः शरणमस्तु मुनिः स्वयन्नः ॥२२॥
सन्मन्त्रवित् क्षिपति संयमिनां नरेन्द्र संसारजिह्मगमुखैः
समुपस्थितं नः ॥ विष्वक्ततं विषमलोभविषं निजाभि-
र्गाढानुभावगरुडध्वजभावनाभिः ॥ २३ ॥ नाथः स
एष यमिनां नखरश्मिजालैरन्तर्निलीनमपनीय तमो
मदीयम् ॥ विज्ञानचित्रमनघं लिखतीव चित्ते व्याख्या-
नकेलिरसिकेन कराम्बुजेन ॥ २४ ॥ उद्गृह्णतीमुपनि-
षत्सु निगूढमर्थं चित्ते निवेशयितुमल्पधियां स्वयं नः ॥
पश्येम लक्ष्मणमुनेः प्रतिपन्नहस्तामुन्निद्रपद्मसुभगामुप-

दशमुद्राम् ॥ २५ ॥ आकर्षणानि निगमान्तसरस्वती-
नामुच्चाटनानिबहिरन्तरुपप्लवानाम्॥पथ्यानिघोरभव-
सज्वरपीडितानां हृद्यानि भान्ति यतिराजमुनेर्वचांसि
॥२६॥ शीतस्वभावसुभगानुभवः शिखावान् दोषाव-
मर्दनियतोन्नतिरोषधीशः ॥ तापानुबन्धशमनस्तपनः
प्रजानां रामानुजो जयति संवलितत्रिधामा ॥ २७ ॥
जयति सकलविद्यावाहिनीजन्मशैलो जनिपथपरिवृत्ति-
श्रान्तविश्रान्तिशाखी॥निखिलकुमतिमायाशर्वरीबाल-
सूर्य्यो निगमजलधिवेलापूर्णचन्द्रो यतींद्रः ॥ २८ ॥
मुनिबहुमतसारा मुक्तिनिःश्रेणिकेयं सहृदयहृदयानां
शाश्वती दिष्टसिद्धिः॥ शमितदुरितगन्धा संयमीन्द्रस्य
सूक्तिः परिचितगहना नः प्रस्तुवीत प्रसादम् ॥ २९ ॥
भवमरुपरिखिन्नस्फीतपानीयसिंधुर्दुरितरहितजिह्वादु-
ग्धकल्याणकुल्या॥ श्रुतिनयनसनाभिः शोभते लक्ष्म-
णोक्तिर्नरकमथनसेवास्वादनाडिन्धमानाम्॥३०॥ हरि-
पदमकरन्दस्यन्दिनः संश्रितानामनुगतबहुशाखास्ताप-
मुन्मूलयन्ति ॥ शमितदुरितगन्धाः संयमीन्द्रप्रबन्धा-
कथकजनमनीषाकल्पनाकल्पवृक्षाः ॥ ३१ ॥ नाना-
भूतैर्जगति समयैर्नर्मलीलां विधित्सोरन्त्यं वर्णं प्रथयति
विभोरादिमव्यूहभेदे॥ विश्वं त्रातुं विषयनियतं व्यञ्जि-
तानुग्रहः सन्विष्वक्सेनो यतिपतिरभूद्वेत्रसारस्त्रिदण्डः
॥ ३२ ॥ लक्ष्यं बुद्धेर्ललितरसनालास्यलीलानिदानं

शुद्धास्वादं किमपि जगति श्रोत्रदिव्यौषधं नः ॥ लक्ष्या-
लक्ष्यैः सितजलधिवद्भातितात्पर्यरत्नैर्लक्ष्मीकान्तस्फटि
कमुकुरो लक्ष्मणार्योपदेशः ॥ ३३ ॥ स्थितिमवधीरय-
न्त्यतिमनोरथसिद्धिमतीं यतिपतिसम्प्रदायनिरपायध-
नोपचिताः ॥ मधुकरमौलिदघ्नमददन्तुरदन्तिघटाकर-
टकटाहवाहिघनशीकरशीकरताम् ॥ ३४ ॥ निरुपधि-
रंगवृत्ति रसिकानभिताण्डवयन्निगमविमर्शकेलिनिरतै-
र्निभृतैर्विधृतः ॥ गुणपरिणद्धसूक्तिदृढकोणविघट्टनया रटति
दिशां मुखेसु यतिराजयशः पटहः ॥ ३५ ॥ इदम्प्रथम-
सम्भवत्कुमतिजालकूलङ्कषा मृषामतविषानलज्वलित-
जीवजीवातवः ॥ क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तय-
श्चिरन्तनसरस्वतीचिकुरबन्धसैरंध्रिकाः ॥ ३६ ॥ सुधाश-
नसुदुर्गहश्रुतिसमष्टिमुष्टिन्धयःकथाहवमसौगतान्कपट
सौगतान्खण्डयन् ॥ मुनिर्मनसि लक्ष्मणो मुदमुञ्चयत्य-
ञ्जसा मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिः सूक्तिभिः ॥ ३७ ॥
कपर्द्दिमतकर्द्दमंकपिलकल्पनावागुरांदुरत्ययमतीत्यतत्
द्रुहिणतन्त्रयंत्रोदरम् ॥ कुदृष्टिकुहनामुखे निपततः पर-
ब्रह्मणःकरग्रहविचक्षणो जयति लक्ष्मणोऽयमुनिः ॥ ३८ ॥
कणादपरिपाविभिः कपिलकल्पनानाटकैः कुमारिलकु-
भाषितैर्गुरु निबन्धनग्रन्थिभिः ॥ तथागतकथाशतैस्त-
दनुसारिजल्पैरपि प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रो-
क्तिभिः ॥ ३९ ॥ कथाकलहकौतुकग्रहगृहीतकौतस्कु-

तम्प्रथाजलधिसंप्लवग्रसनकुम्भसम्भूतयः॥जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासनाप्रभावपरिपक्त्रिम प्रमितभारतीसम्पदः ॥ ४० ॥ यतीश्वरसरस्वतीसुरभिताशयानां सतां वहामि चरणाम्बुजं प्रणतिशालिना मौलिना ॥ तदन्यमतदुर्मदज्वलितचेतसां वादिनां शिरस्सु निहतं मया पदमदक्षिणं लक्ष्यताम् ॥ ४१ ॥ भजस्व यतिभूपतेरनिदमादिदुर्वासनाकदध्वपरिवर्त्तनश्रमनिवर्त्तनीं बर्त्तनीम् ॥ लभस्व हृदये स्वयं रथपदायुधानुग्रहद्रुतप्रहतिनिस्रुटद्दुरितदुर्वृतिं निर्वृतिम् ॥४२॥ कुमतिविहितग्रन्थग्रन्थीप्रभूतमतान्तरग्रहिलमनसः पश्यन्त्यल्पां यतीश्वरभारतीम्॥ विकटसुरभिद्वक्षःपीठीपरिष्करणोचितः कुलगिरितुलारोहे भावी कियानिवकौस्तुभः ॥ ४३ ॥ स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं कुमतिभणितिक्षोभक्षीबाः क्षिपन्तु भजन्तु वा ॥ रसपरिमलश्लाघाघोषस्फुटत्पुटभेदनं लवणवणिजः कर्पूरार्धं किमित्यभिमन्वते ॥ ४४ ॥ वहति महिलामाद्योवेधास्त्रयीमुखरैर्मुखैर्वरतनुतया वामो भागः शिवस्य विवर्त्तते ॥ तदपि परमं तत्वं गोपीजनस्य वशंवदं मदनकदनैर्न क्लिश्यन्ते यतीश्वरसंश्रयाः ॥४५॥ निगमपथिकच्छायाशाखी निराशमहानिधिर्महितविविधच्छात्रश्रेणीमनोरथसारथिः ॥ त्रिभुवनतमःप्रत्यूषोऽयं त्रिविद्यशिखामणिर्यतिपरिवृढो रक्षायन्त्रं रमापतिसम्पदाम्

॥ ४६ ॥ जडमतिमुधादन्तादन्तिव्यथौषधिसिद्धयः
प्रमितिनिधयः प्रज्ञाशालिप्रचालनयष्टयः ॥ श्रुतिसुर-
भयः शुद्धानन्दाभिवर्षुकवारिदा यमगतिकथाविच्छे-
दिन्यो यतीश्वरसूक्तयः ॥ ४७ ॥ प्रतिकलमिह प्रत्य-
क्तत्त्वालोकनदीपिकां यतिपरिवृढग्रन्थाश्चिन्तां निरन्त-
रयन्तु नः॥अकलुषपरिज्ञानौत्सुक्यक्षुधातुरदुर्दशः परि-
णतफलप्रत्यासीदत्फलेग्रहिसुग्रहाः ॥ ४८ ॥ मुकुन्दा-
ङ्घ्रिश्रद्धाकुमुदवनचंद्रातपनिभा मुमुक्षामक्षोभ्यां ददति
मुनिवृन्दारकगिरः॥ स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वा
दिपरिषद्दिवाभीतप्रेक्षादिनकरसमुत्थानपुरुषाः ॥४९॥
निराबाधा बोधायनभणितिनिष्पन्दसुभगा विशुद्धोप-
न्यासव्यतिभिदुरशारीरकनयाः ॥ अकुण्ठैः कल्पान्ते
यतिपतिनिबंधानिजमुखैरनिद्राणप्रज्ञारसधमनिबोधाय
सुधियाम् ॥ ५० ॥ विकल्पाटोपेन श्रुतिपथमशेषं
विघटयन् यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ॥
वितण्डाहंकुर्वत्प्रतिकथकवेतण्डपृतनाभिधानव्यापारव्य
तिभिदुरसंरम्भकलहः ॥ ५१ ॥ प्रतिष्ठा तर्काणां प्रति-
पदमृचां धाम यजुषां परिष्कारः साम्नां परिपणमथर्वा-
ङ्गिरसयोः ॥ प्रदीपस्तत्त्वानां प्रतिकृतिरसौ तापसगिरां
प्रसत्तिं संवित्तेःप्रदिशतु यतीशानभणितिः ॥ ५२ ॥
हतावद्ये हृद्ये हरिचरणपङ्केरुहयुगे निबध्नन्त्यैकांत्यं
किमपि यतिभूभृद्भणितयः ॥ शुनासीरस्कन्दद्रुहिणह

हेरम्बहुतभुक्प्रभेशादिक्षुद्रप्रगतिपरिहारप्रतिभुवः।६३॥ यथाभूयस्वार्थां यतिनृपतिसूक्तिर्विजयते सुधासन्दोहात्मा सुचरितविपक्तिः श्रुतिगिराम्॥ कथाहृप्यत्कौतस्कुतकलहकोलाहलहतत्रिवेदीनिर्वेदप्रशमनविनोद प्रणयिनी ॥ ६४ ॥ श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमते स्वपक्ष स्थान् दोषान् वितथमतिरारोपयति यः ॥ स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलंगलद्भिर्जम्बालैर्गगनतलमालिम्पतिजडः ॥६५॥ निरालोके लोके निरवधि परस्नेहभरितोयदिक्ष्मामृद्दीपो यदि न खलु जाज्वल्यत इह ॥ अहंकारध्वान्तं विजहतु कथंकारमनघाः कुतर्कव्यालौघं कुमतिमतपातालकुहरम् ॥६६॥ यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपिकिं ततः प्रागेवान्यद्भद तदपि किं वर्णनिकषे॥ निशाम्यन्तां यद्वा निजमततिरस्कारविगमान्निरातंकाष्टंकद्रविडगुहदेवप्रभृतयः ॥६७॥ सुधासारं श्रीमद्यतिवरभुवः श्रोत्रकुहरे निषिञ्चन्त्यन्वञ्चन्निगमगरिमाणो भणितयः॥ यदा स्वादाभ्यासप्रचयमहिमोल्लासितधियां सदाम्वाद्यं काले तदमृतमनन्तं सुमनसाम् ॥६८॥ यतिक्षोणीभर्तुर्यदिदमनिदम्भोगिजनताशिरःश्रेणीजुष्टं तदिह दृढबन्धं प्रभवति ॥ अविद्यारण्यानीकुहरविरहन्मामकमनःप्रमाद्यन्मातङ्गप्रथम निगलं पादयुगलम् ॥६९॥ सवित्री मुक्तानां सकलजगदेनः प्रशमनीं गरीयोभिस्तीर्थैरुपचितरसा यामुनमुखैः ॥ निरुच्छेदा

निम्नेतरमपि समाप्लावयति मां यद्दृच्छा विक्षेपाद्यतिवर-दयादिव्यतटिनी ॥६०॥ चिंताशेषदुरर्थदन्तुरवचः कन्थाशतग्रन्थिलाः सिद्धान्ता न समिन्धते यतिपतिग्रन्थानुसन्धातरि ॥ मुक्ताशुक्तविशुद्धसिद्धतटिनी चूडालचूडापदः किं कुल्यां कलयेत खण्डपरशुर्मंडूकमंजूषिकाम् ॥६१॥ वन्दे तं यमिनां धुरन्धरमहम्मानान्धकारद्रुहां पन्थानं परिपन्थिनां निजदृशारुन्धानमिंधानया ॥ दत्तं येन दयासुधाम्बुनिधिना पीत्वा विशुद्धं पयः काले नः करिशैलकृष्णजलदः कांक्षाधिकं वर्षति ॥६२॥ काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता सा मूर्तिर्मुरमर्द्दनस्य जयति त्रय्यन्तसंरक्षिणी ॥ यत्प्रख्यापिततीर्थवर्द्धितधियामभ्यस्यतां यद्गुणानासिंधोरनिदंप्रदेशनियता कीर्तिः प्रजागर्त्ति नः ॥६३॥ लिप्से लक्ष्मणयोगिनः पदयुगं रथ्यापरागच्छटारक्षारोपणधन्यसूरिपरिषत्सीमन्तसीमान्तिकम् ॥ भिक्षापर्यटनक्षणेषु बिभराञ्चके गलत्किल्बिषा यद्विन्यासमिषेण पत्रमकरीमुद्रां समुद्राम्बरा ॥६४॥ नानातन्त्रविलोभितेन मनसा निर्णीतदुर्नीतिभिःकष्टं कुत्सितदृष्टिभिर्यतिपतेरादेशवैदेशिकैः ॥ व्यासो हासपदीकृतः परिहृतः प्राचेतसश्चेतसः क्लृप्तः केलिशुकः शुकः सच सुधाबाधाय बोधायनः ॥६५॥ आर्थ्या तिष्ठति मामिका मतिरसावाजन्म राजन्वती पत्या संयमिनामनेन जगतामत्याहितच्छेदिना यत्सा-

रस्वतदुग्धसागरसुधासिद्धौषधास्वादिनां प्रस्वापाय न बोभवीति भगवन्मायामहायामिनी ॥६६॥ शुद्धादेशवशंवदीकृतयतिक्षोणीशवीणाशतप्रत्यादिष्टबहिर्गतिः श्रुतिशिरःप्रासादमासीदति ॥ दुग्धोदन्वदपत्यसन्निधिसदासामोददामोदरश्लक्ष्णालोकनदौर्ललित्यजनितोन्मेषा मनीषा मम ॥६७॥ आस्तां नाम यमीन्द्रपद्धतिजुषामाजन्मशुद्धामतिस्तत्राव्याजविशुद्धमुग्धमधुरंसारस्वतं शाश्वतम् ॥ को वा चक्षुरुदञ्चयेदपि पुरः साटोपतर्कच्छटाशस्त्राशस्त्रिविहारसम्भृतरणास्वादेषु वादेषु नः ॥६८॥ पर्याप्तंपर्यचैषं कणचरणकथापाक्षपादं स्वशिक्षं मीमांसामांसलात्मा समजनिषि मुहुःसांख्ययोगौ समाख्यम् ॥ इत्यतस्तैर्यतीन्द्रत्रुटितबहुमृषातन्त्रकान्तारपान्थैरन्तर्मोहक्षपान्थैरहह किमिह नश्चिन्तनीयं तनीयः ॥ ६९ ॥ गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते॥क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥७०॥ विष्वग्व्यापिन्यगाधे यतिनृपतियशःसंपदेकार्णवेस्मिन् श्रद्धाशुद्धावगाहैःशुभमतिभिरसौ वेंकटेशोभिषिक्तः ॥ प्रज्ञादौर्जन्यगर्जत्प्रतिकथकवचस्तूलवातूलवृत्त्या सप्तत्या सारवत्या समतनुत सतां प्रीतिमेतांसमेताम् ॥ ७१ ॥ आशामतङ्गजगणानमिषह्यवेगान्पादे

यतिक्षितिभृतः प्रसभं निरुन्धन् ॥ कार्य्यैःकथाहवकुतूहलिभिः परेषां कर्णे स एष कवितार्किकसिंहनादः ॥ ७२ ॥ उपशमितकुदृष्टिविप्लवानां श्रुतिशिरसामुपचारदीपिकेयम् ॥ कवलित भगवद्विभूतियुग्मां दिशतु मतिं यतिराजसप्ततिर्नः ॥७३॥ करतलामलकीकृतसत्पथाः श्रुतिवतंसितसूनृतसूक्तयः ॥ दिवि सतारकयन्ति समत्सरान्यतिपुरन्दरसप्ततिसादराः ॥ ७४ ॥ इति श्रीयतिराजसप्ततिः सम्पूर्णा ॥ २५ ॥

## श्रीवेङ्कटेशसुप्रभातम्

श्रीमते रामानुजाय नमः ॥ कौशल्या सुप्रजा रामपूर्वा सन्ध्या प्रवर्त्तते॥उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥१॥ उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज॥ उत्तिष्ठ कमलाकान्त त्रिलोक्य मङ्गलं कुरु ॥२॥ मातः समस्तजगतांमधुकैटभारेर्वक्षोविहारिणि मनोहरदिव्यरूपे॥ श्रीस्वामिनि श्रितजनप्रियदानशीले श्रीवेङ्कटेशदयिते तव सुप्रभातम् ॥ ३ ॥ तव सुप्रभातमरविंदलोचने भवतु प्रसन्नमुखचंद्रमण्डले ॥ विधिशंकरेंद्रवनिताभिरर्चिते वृषशैलनाथदयिते दयानिधे ॥४॥ अत्र्यादिसप्तऋषयस्समुपास्य संध्यामाकाशसिंधुकमलानि मनोहराणि ॥ आदाय पादयुगमर्चयितुं प्रसन्नः शेषाद्रिशेखरविभोतव सुप्रभातम् ॥५॥ पञ्चाननाब्जभवषण्मुखवासवाद्यास्त्रैविक्रमादिचरितं विबुधाः स्तुवंति ॥ भा-

षापतिः पटति वासरशुद्धिमारात् शेषाद्रिशेखरविभो तव सुप्रभातम् ॥६॥ ईषत्प्रफुल्लसरसीरुहनारिकेलपूगद्रुमादिसुमनोहरपालिकानाम् ॥ आवाति मन्दमनिलः सह दिव्यगन्धैः शेषाद्रिशेखर विभो तव सुप्रभातम् ॥७॥ उन्मील्य नेत्रयुगमुत्तमपञ्जरस्थाः पात्रावशिष्टकदलीफलपायसानि ॥ भुक्त्वा सलीलमथ केलिशुकाः पठन्ति शेषाद्रिशेखर विभो तव सुप्रभातम् ॥८॥ तन्त्रीप्रकर्षमधुरस्वनया विपञ्च्यागायत्यनन्तचरितं तव नारदोऽपि ॥ भाषासमग्रमधुकृत्कर चारुरम्यान् शेषाद्रिशेखर विभो तव सुप्रभातम् ॥ ९ ॥ भृङ्गावली च मकरन्दरसानुविद्धझङ्कारगीतिनिनदैः सह सेवनाय ॥ निर्यात्युपान्तसरसीकमलोदरेभ्यः शेषाद्रिशेखरविभो तव सुप्रभातम् ॥१०॥ योषागणेन वरदध्नि विमथ्यमाने घोषालयेषु दधिमन्थनतीव्रघोषाः ॥ रोषात्कलिं विदधते ककुभश्च कुम्भाः शेषाद्रिशेखर विभो तव सुप्रभातम् ॥ ११ ॥ पद्मेशमित्रबहुपत्रकृतालिवर्गा हर्तुं श्रियं कुवलयस्य सितारुणांगाः ॥ भेरीविनादमिव बिभ्रति तीव्रघोषं शेषाद्रिशेखर विभो तव सुप्रभातम् ॥ १२ ॥ श्रीमन्नभीष्टवरदाखिललोकबन्धो श्रीश्रीनिवास जगदेकदयैकसिन्धो ॥ श्रीदेवतागृहभुजान्तर दिव्यमूर्तें श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १३ ॥ श्रीशेष शैलगरुडाचल वेंकटाद्रिनारायणाद्रिवृषभाद्रिवृषाद्रिमुख्यान् ॥ आख्यां

तवादिवसतेरनिशंवदन्ति श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १४ ॥ श्रीस्वामिपुष्करिणिकाप्लवनिर्मलांगाः श्रेयोऽर्थिनोहर विरिंचिसनन्दनाद्याः ॥ द्वारे वसंति वरवेत्रहतोत्तमांगाः श्रीवेंकटाचलपते तव सुप्रभातम् ॥१५॥ सेवापराः शिवसुरेशकृशानुधर्मरक्षोम्बुनाथपवमानधनाधिनाथः ॥ बद्धाञ्जलिप्रविलसन्निजशीर्षदेशाः श्रीवेंकटाचलपते तव सुप्रभातम् ॥१६॥ धाटीषु ते विहगराजमृगाधिराजन्नागाधिराजगजराजहयाधिराजाः ॥ स्वस्वाधिकारमहिमाधिकमर्चयन्ति श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १७ ॥ सूर्येन्दु भौमबुधवाक्पतिकाव्यसौरिस्वर्भानुकेतुदिविषत्परिषत्प्रधानाः ॥ त्वद्दासदासचरमावधिदासदासाः श्रीवेंकटाचलपतेतव सुप्रभातम् ॥१८॥ त्वत्पादधूलिभरितस्फुरितोत्तमांगाः स्वर्गापवर्गनिरपेक्षनिजान्तरंगाः ॥ कल्पागमाकलितयाकलितां लभन्ते श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १९ ॥ त्वद्गोपुराग्रशिखराणि निरीक्षमाणाःस्वर्गापवर्गपदवीपदमाश्रयन्ते॥ मर्त्या मनुष्यभवने मतिमाश्रयन्ते श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २० ॥ श्रीभूमिनायक दयाद्विगुणामृताब्धे देवाधिदेव जगदेकशरण्यमूर्ते ॥ श्रीमन्ननन्त गरुडादिभिरर्चिताङ्घ्रे श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २१ ॥ श्रीपद्मनाभ पुरुषोत्तम वासुदेव वैकुण्ठ माधव जनार्दन चक्रपाणे॥ श्रीवत्सचिह्न शरणा-

गतपारिजात श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२२॥
कन्दर्पदर्पहर सुन्दरदिव्यमूर्त्तेकान्ताकुचाम्बुरुहकुड्मल
लीनदृष्टे ॥ कल्याणनिर्मलगुणाकर दिव्यकीर्त्ते श्रीवेंक-
टाचलपते तव सुप्रभातम् ॥ २३ ॥ मीनाकृते कमठ-
कोल नृसिंह वर्णिन् स्वामिन्परश्वधतपोधन रामचन्द्र॥
शेषांशराम यदुनन्दन कल्किरूप श्रीवेंकटाचलपते तव
सुप्रभातम् ॥ २४ ॥ एलालवंगघनसारसुगन्धतीर्थं
दिव्यं वियत्सरसि हेमघटेषु पूर्णम् ॥ धृत्वाद्यवैदिकशि-
खामणयः प्रहर्षात्तिष्ठन्ति वङ्कटपते तव सुप्रभातम्
॥ २५ ॥ भास्वानुदेति विकचानि सरोरुहाणि सम्पूर-
यन्ति निनदैः ककुभो विहङ्गाः॥ श्रीवैष्णवाः सततम-
र्थितमङ्गलास्ते धामाश्रयन्ति तव वेंकट सुप्रभातम्
॥२६॥ ब्रह्मादयः शिवसुरेशमहर्षयस्ते सन्तस्सनन्द-
नमुखास्त्वथ योगिवर्याः ॥ धामान्तिके तव हि मङ्गल-
वस्तुहस्ताः श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २७ ॥
लक्ष्मीनिवास निरवद्यगुणैकसिन्धो संसारसागरसमुत्तर-
णैकसेतो॥ वेदान्तवेद्यनिजवैभवभक्तभोग्य श्रीवेंकटाच-
लपतेरिह सुप्रभातम् ॥ २८॥ इत्थं वृषाचलपते तव
सुप्रभातं ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः ॥ तेषां
प्रभातसमये स्मृतिरङ्गभाजां प्रज्ञां परार्थसुलभां परमां
प्रसूते ॥२९॥ इति श्रीवेंकटेशसुप्रभातं सम्पूर्णम् ॥२६॥

# श्रीवेंकटेशस्तोत्रम्

श्रीमते रामानुजाय नमः ॥ कमलाकुचचूचुककुङ्कुमतो
नियतारुणतातुलनीलतनो ॥ कमलायतलोचन लोकपते
विजयी भव वेंकटशैलपते ॥ १ ॥ सचतुर्मुखषण्मुखप
ञ्चमुखप्रमुखाखिलदैवतमौलिमणे ॥ शरणागतवत्सल
सारनिधे परिपालय मां बृषशैलपते ॥ २ ॥ अतिवेल
तया तव दुर्विषयैरतिवेलकृतैरपराधशतैः ॥ भरित
त्वरितं बृषशैलपते परया कृपया परिपाहि हरे ॥३
अधिवेंकटशैलमुदारमतेजनताभिमताधिकदानरतात्
परदेवतया कथितान्निगमैः कमलादयितान्न परं कलये
॥ ४ ॥ कलवेणुरवावशगोपवधूशतकोटिवृतात् स्मरको
टिसमात् ॥ प्रतिबल्लविकाभिमतात् सुहृदो वसुदेवसुतान्न
परं कलये ॥ ५ ॥ अभिरामगुणाकर दाशरथे जगदेक
धनुर्धर धीरमते ॥ रघुनायक राम रमेश विभो वरद
भव देव दयाजलधे ॥ ६ ॥ अवनीतनयाकमनीयक
रजनीकरचारुमुखाम्बुरुहम् ॥ रजनीचरराजितमोमिहि
महनीयमहं रघुराममये ॥ ७ ॥ सुमुखं सुहृदं सुल
सुखदं सुजनं वसुजातममोघशरम् ॥ अपहायरघूद्वहम
न्यमहं न कथंचन कञ्चन जातु भजे ॥८॥ विना वेंकटे
न नाथो न नाथः सदा वेंकटेशं स्मरामिस्मरामि ॥ ह
वेंकटेश प्रसीद प्रसीद प्रियं वेंकटेशं प्रयच्छ प्रयच्छ ॥९

अहं दूरतस्थः पदाम्भोजयुग्मप्रणामेच्छया नित्यसेवां करोमि ॥ सकृत्सेवया नित्यसेवाफलं त्वं प्रयच्छ प्रयच्छ प्रभो वेंकटेश ॥ १० ॥ अज्ञानिना मया दोषानशेषान् विहितान् हरे॥क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे ॥११॥ ईशानां जगतोऽस्य वेंकटपतेर्विष्णोः प्रियां प्रेयसीं तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम्॥ पद्मालंकृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥१२॥ इति श्रीवेंकटेशस्तोत्रं सम्पूर्णम् ॥ २७ ॥

## अथ श्रीजितंतेस्तोत्रम्

श्रीमते रामानुजाय नमः ॥ जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह ॥ परानन्द परब्रह्म नमस्ते चतुरात्मने ॥ १ ॥ नमस्ते पीतवसने नमः कटकधारिणे ॥ नमो नीलालकाबद्धवेणीसुन्दर पुङ्गव ॥ २ ॥ स्फुरद्वलयकेयूरनूपुराङ्गदभूषणैः ॥ शोभनैर्भूषिताकार कल्याणगुणराशये ॥३॥ करुणापूर्णहृदय शंखचक्रगदाधर ॥ अमृतानंदपूर्णाभ्यां लोचनाभ्यां विलोकय ॥ ४ ॥ कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम्॥अपराधसहस्राणामाकरं करुणाकर ॥ ५ ॥ कृपया मां केकलया गृहाण मथुराधिप ॥ विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ॥ ६ ॥ पिता माता सुहृद्बंधुर्भ्राता पुत्रत्वमेव मे ॥

विद्या धनं च कामश्च नान्यत्किञ्चित्त्वया विना ॥७॥ यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे ॥ तवदास्यैकभावे स्यात्सदा सर्वत्र मे रतिः ॥८॥ मनसा कर्मणा वाचा शिरसा वा कथंचन ॥ त्वां विना नान्यमुद्दिश्य करिष्ये किंचिदप्यहम् ॥ ९ ॥ पाहि पाहि जगन्नाथ कृपया भक्तवत्सल ॥ अनाथोऽहमधन्योऽहमकृतार्थोऽह्य किञ्चनः ॥१०॥ नृशंस पापकृत् क्रूरो वञ्चको निष्ठुरः सदा ॥ भवार्णवनिमग्नं मामनन्यकरुणोदधे॥११॥ करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय॥त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो ॥ १२ ॥ मया कृतानि पापानि त्रिविधानि पुनः पुनः ॥ त्वत्पादपंकजं प्राप्तुं नान्यत्त्वत्करुणां विना ॥१३॥ साधनानि प्रसिद्धानि यागादीन्यब्जलोचन ॥ त्वदाज्ञया प्रयुक्तानि त्वामुद्दिश्य कृतानि वै ॥ १४ ॥ भक्त्यैकलभ्यःपुरुषोत्तमोहि जगत्प्रसूतिस्थितिनाशहेतुः ॥ अकिञ्चनं नान्यगतिं शरण्यं गृहाण मांक्लेशिनमम्बुजाक्ष ॥ १५ ॥ धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ॥ त्वत्पादपंकजं साधोर्जीवितं दीयतां मम ॥ १६ ॥ कामये तावकत्वेन परिचर्यासु वर्तनम् ॥ नित्यं किंकरभावेन परिगृह्णीष्व मां विभो ॥ १७ ॥ लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् ॥ अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ १८ ॥ नित्यसिद्धैः

समाकीर्णं त्वन्मयैःपाञ्चकालिकैः ॥ सभाप्रासादसंयुक्तं वनैश्चोपवनैःशुभैः ॥ १९ ॥ वापीकूपतटागैश्च वृक्षखंडैः सुमण्डितम्॥अप्राकृतसुरैर्वन्द्यमयुतार्कसमप्रभम्॥२०॥ प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा॥क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशवम् ॥२१ ॥ मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा॥ उन्नसं चारुदशनं बिम्बोष्ठं च शुभाननम्॥ २२ ॥ विशालवक्षसं श्रीशं-कम्बुग्रीवं जगद्गुरुम्॥आजानुबाहुपरिघमुन्नतांसं मधु-द्विषम् ॥२३॥ तनूदरं निम्ननाभिमापीनजघनं हरिम् ॥ करभोरुश्रियः कान्तं कदाद्रक्ष्यामि चक्षुषा ॥ २४ ॥ शंखचक्रगदापद्मैरङ्कितं पादपङ्कजम् ॥ शरच्चन्द्रशता-कान्तं नखराजिविराजितम् ॥२५॥ सुरासुरैर्वन्द्यमान-मृषिभिर्वंदितं सदा॥मूर्द्धानं मामकं देव तावकं मण्ड-यिष्यति ॥२६॥ कदा गम्भीरया वाचा श्रिया युक्तो जगत्पते ॥ चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यसि॥ ॥२७॥ कदाहं राजराजेन गणानाथेन नोदितः ॥चरेयं भगवत्पादपरिचर्यानुवृत्तिषु ॥२८॥ शान्ताय सुविशु-द्धाय तेजसे परमात्मने ॥ नमः सर्वगुणातीतषाड्गुण्या यातिवेधसे॥ २९ ॥ सत्यज्ञानानन्तगुणब्रह्मणे चतुरा-त्मने ॥ चतुःपञ्चनवव्यूहदशद्वादशमूर्त्तये ॥ ३० ॥ नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे॥ नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ॥ ३१ ॥ पञ्चकालैकम-नसां त्वमेव गतिरव्यः॥ स्वमहिम्नि स्थितं देवं निर्वि-

कारं निरञ्जनम् ॥ ३२ ॥ अप्रमेयमजं विष्णुं शरणं त्वां गतोऽस्म्यहम् ॥ गुणातीतं परं शान्तमब्जनाभं सुरेश्वरम् ॥३३॥ तुरीयाद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् ॥ विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥ ३४ ॥ मोक्षं सालोक्यसारूप्यं प्रार्थये नु धराधर॥इच्छामि हि महाभाग कारुण्यं तव सुव्रत ॥ ३५ ॥ सकलावरणातीत किंकरोऽस्मि तवानघ ॥ पुनः पुनः किंकरोऽस्मि तवाहं पुरुषोत्तम ॥ ३६ ॥ आसनाद्यनुयागान्तमर्चनं यन्मया कृतम् ॥ भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम् ॥ ३७ ॥ तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु ॥ इति स्तोत्रेण देवेशं स्तुत्वा मधुविघातिनम् ॥ ३८ ॥ यागावसानसमये देवदेवस्य चक्रिणः॥ नित्यं किङ्करभावेन स्वात्मानं विनिवेदयेत् ॥ ३९ ॥ इति श्रीपंचरात्रागमे जितंतेस्तोत्रे प्रथमोऽध्यायः ॥ १ ॥

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥ विज्ञापनमिदं देव शृणुष्व पुरुषोत्तम ॥ नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ॥२॥ नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः॥ ब्रह्मेशाद्यैः सुरगणैः पञ्चकालपरायणैः ॥ ३ ॥ पूज्यसे पुण्डरीकाक्ष दिव्यैर्मन्त्रैर्महात्मभिः॥ पाषण्डधर्मसङ्कीर्णे भगवद्भक्तिवर्जिते ॥४॥ कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते॥कथं त्वामसमाचारः पापप्रसवभूरहम्॥५॥

अर्चयामि दयासिन्धो पाहि मां शरणागतम् ॥
तापत्रयदवाग्नौ च दह्यमानं सदा विभो ॥ ६ ॥ पाहि
मां पुण्डरीकाक्ष केवलं कृपया तव ॥ जन्ममृत्युजराव्या-
धिदुःखसन्तप्तदेहिनम् ॥ पालयाशु दृशा देव तव कारु-
ण्यगर्भया ॥७॥ इन्द्रियाणि मया जेतुमशक्यं पुरुषो-
त्तम ॥ शरीरं मम देवेश व्याधिभिः परिपीडितम् ॥८॥
मनो मे पुण्डरीकाक्ष विषयानेव धावति ॥ वाणी मम
हृषीकेश मिथ्यापारुष्यदूषिता ॥ ९ ॥ एवं साधनही-
नोऽहं किं करिष्यामि केशव ॥ रक्ष मां कृपया कृष्ण
भवाब्धौ पतितं सदा ॥१०॥ अपराधसहस्राणां सहस्र-
मयुतं तथा ॥ अर्बुदं चाप्यसंख्येयं करुणाब्धे क्षमस्व
मे ॥ ११ ॥ यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ॥
अज्ञस्य मम देवेश तत्सर्वं क्षन्तुमर्हसि ॥१२॥ अज्ञ-
त्वादल्पशक्तित्वादालस्याद्दुष्टभावनात् ॥ कृतापराध-
कृपणं क्षन्तुमर्हसि मां विभो ॥१३॥ अपराधसहस्राणि
क्रियन्तेऽहर्निशं मया ॥ तानि सर्वाणि मे देव क्षमस्व
मधुसूदन ॥ १४ ॥ यज्जन्मनः प्रभृति मोहवशाङ्कृतेन
नानापराधशतमाचरितं मया ते ॥ अन्तर्बहिश्च सकलं
तव पश्यतोऽपि क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥१५॥
कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ॥ केशवा-
राधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥१६॥ इति श्रीप-
ञ्चरात्रागमे जितन्तेस्तोत्रे द्वितीयोऽध्यायः ॥२॥ जितं

ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेऽस्तु हृषी-
केश महापुरुषपूर्वज ॥ १ ॥ नमस्ते वासुदेवाय शांता-
नन्दचिदात्मने ॥ अध्यक्षाय स्वतन्त्राय निरपेक्षाय
शाश्वते ॥ २ ॥ अच्युतायाविकाराय तेजसां निधये
नमः ॥ क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्त्तये ॥ ३ ॥
त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्योजसां युगैः ॥ त्रियुगाय
नमस्तेऽस्तु नमस्ते चतुरात्मने ॥४॥ प्रधानपुरुषेशाय
नमस्ते पुरुषोत्तम ॥ चतुःपञ्चनवव्यूहदशद्वादशमूर्त्तये
॥५॥ अनेकमूर्त्तये तुभ्यममूर्त्तायैकमूर्त्तये ॥ नारायण
नमस्तेऽस्तु पुंडरीकायतेक्षण ॥ ६ ॥ सुभ्रूललाट सुनस
सुस्मिताधरविद्रुम ॥ पीनवृत्तायतभुज श्रीवत्सकृतभूषण
॥ ७ ॥ तनुमध्यमहावक्षः पद्मनाभ नमोऽस्तु ते ॥
त्रिलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज ॥८॥ नमस्ते
पीतवसन स्फुरन्मकरकुण्डल ॥ स्फुरत्किरीटकेयूरहार-
कौस्तुभभूषण ॥ ९ ॥ पञ्चायुध नमस्तेऽस्तु नमस्ते
पञ्चकालिक ॥ पञ्चकालाय ते क्रान्तयोगक्षेमावह प्रभो॥
॥१०॥ नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ॥ नमस्ते
ब्रह्मरुद्रादिलोकयात्राप्रवर्तक ॥ ११ ॥ जन्मप्रभृति
दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ॥ त्वं च
स्वामी गुरुर्माता पिता च मम माधव ॥ १२ ॥
अयि त्वां भगवन् ब्रह्मशिवशक्रमहर्षयः ॥ द्रष्टुं यष्टुम-
भिष्टोतुमद्यापीश नहीशिरे ॥ १३ ॥ तापत्रयमहाग्राह-

भीषणे भवसागरे ॥ मज्जतां नाथ नौरेषा प्रणतिस्तु त्वदर्पिता ॥१४॥ अनाथाय जगन्नाथ शरण्याशरणार्थिने ॥ प्रसीद सीदते मह्यं मुह्यते भक्तवत्सल ॥१५॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ॥ तत् क्षन्तव्यं प्रपन्नानामपराधसहोह्यसि ॥ १६ ॥ सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ॥ किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः ॥ १७ ॥ एकत्रिचतुरत्यन्तचेष्टज्येष्ठाकृतिस्थिते ॥ व्यक्तषाड्गुण्यचेष्टाय चतुरात्मात्मने नमः ॥ १८ ॥ इति श्रीपञ्चरात्रागमे जितंतेस्तोत्रे तृतीयोऽध्यायः ॥३॥ जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्य विग्रह ॥ नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥ देवानां दानवानां च सामान्यमधिदैवतम् ॥ सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥२॥ एकस्त्वमस्य लोकस्य स्रष्टा संहारकस्तथा ॥ अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥३॥ संसारसागरं घोरमनन्तक्लेशभाजनम् ॥ त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥४॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् ॥ तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ ५ ॥ नैव किंचित् परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ॥ नैव किंचिदसाध्यं ते न चासिद्धोऽसि कर्हिचित् ॥६॥ कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ योगिनां परमां सिद्धिं परमं ते पदं विदुः ॥७॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भया-

वहे ॥ पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥८॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ॥ शरीरे च गतौ चास्य वर्तते मे महद्भयम् ॥९॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ॥ निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ १० ॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमूर्जितम् ॥ जन्मान्तरेऽपि देवेश माभूदस्य परिक्षयः ॥ ११ ॥ दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ॥ यदि नाशं न विन्देत तावतास्मि कृती सदा ॥१२॥ न कामकलुषं चित्तं मम ते पादयोः स्थितम् ॥ कामये वैष्णवत्वं च सर्वजन्मसु केवलम् ॥१३॥ अज्ञानाद्यदि वा ज्ञानादशुभं यत् कृतं मया ॥ क्षन्तुमर्हसि देवेश दास्येन च गृहाण माम् ॥१४॥ सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ॥ किंकरोऽस्मि हृषीकेश भूयोभूयोऽस्मि किंकरः ॥ १५ ॥ इत्येवमनया स्तुत्या स्तुत्वा देवं विनोदये ॥ किंकरोस्मीति चात्मानं देवाय विनिवेदयेत् ॥ १६ ॥ यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ॥ अज्ञस्य मम देवेश तत्सर्वं क्षन्तुमर्हसि ॥ १७॥ अहंकारार्थकामेषु प्रीतिरद्यैव नश्यतु ॥ त्वां प्रसन्नस्य मे सैव वर्द्धतां श्रीमति त्वयि ॥१८॥ क्वाहमत्यन्तदुर्बुद्धिः क्व नु चात्महितेक्षणम् ॥ यद्धितं मम देवेश तदाज्ञापय माधव ॥ १९ ॥ सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च ॥ सामर्थ्यवान् कृपामात्रमनोवृत्ति प्रसीद मे ॥ २० ॥

उपचारापदेशेन क्रियतेऽहर्निशं मया॥ अपचारानिमान्
सर्वान्क्षमस्व पुरुषोत्तम ॥ २१ ॥ न जाने कर्म यत्
किंचिन्नापि लौकिकवैदिकौ ॥ न निषेधविधी विष्णो
तव दासोऽस्मि केवलम् ॥२२॥ स त्वं प्रसीद भगवन्
कुरु मय्यनाथे विष्णो कृपां परम कारुणिकः किल त्वम्॥
संसारसागरनिमग्नमनन्तदीनमुद्धर्तुमर्हसि हरे पुरुषोत्तमो
ऽसि ॥२३॥ इति श्रीपञ्चरात्रागमे जितंतेस्तोत्रे चतुर्थो-
ध्यायः ॥४॥ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन॥
नमस्तेऽतु हृषीकेश महापुरुष पूर्वज ॥ १ ॥ नमस्ते
वासुदेवाय शान्तानन्तचिदात्मने॥अजिताय नमस्तुभ्यं
षाड्गुण्यनिधये नमः ॥२॥ महाविभूतिसंस्थाय नमस्ते
पुरुषोत्तम ॥ सहस्रशिरसेतुभ्यं सहस्रचरणाय ते ॥३॥
सहस्रबाहवे तुभ्यं सहस्रनयनाय ते ॥ अमूर्त्तये नमस्तु-
भ्यमेक मूर्त्ताय ते नमः ॥४॥ अनेकमूर्त्तये तुभ्यमक्षराय
च ते नमः ॥ व्यापिने वेदवेद्यायनमस्ते परमात्मने ॥५॥
चिन्मात्ररूपिणे तुभ्यं नमस्तुर्यादिमूर्त्तये ॥ अणि-
ष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥ ६ ॥ वरिष्ठाय
वसिष्ठाय कनिष्ठाय नमो नमः॥ नेदिष्ठाय दविष्ठाय क्षेपि-
ष्ठाय च ते नमः ॥७॥ पञ्चात्मने नमस्तुभ्यं सर्वान्त-
र्यामिणे नमः ॥ कलाषोडशरूपाय सृष्टिस्थित्यन्तहेतवे
॥८॥ नमस्ते गुणरूपाय गुणरूपानुवर्तिने ॥ व्यस्ताय
च समस्ताय समस्तव्यस्तरूपिणे ॥ ९ ॥ लोकयात्रा-

प्रसिद्धयर्थं सृष्टब्रह्मादिरूपिणे ॥ नमस्तुभ्यं नृसिंहादि-मूर्तिभेदाय विष्णवे ॥ १० ॥ आदिमध्यान्तशून्याय तद्वते च नमो नमः ॥ प्रणवप्रतिपाद्याय नमः प्रणव-रूपिणे ॥ ११ ॥ विपाकैः कर्मभिः क्लेशैरस्पृष्टवपुषे नमः ॥ नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ॥१२॥ नित्यासाधारणानेकलोकरक्षापरिच्छदे॥सच्चिदानन्दरू-पाय वरेण्याय नमो नमः ॥ १३ ॥ यजमानाय यज्ञाय यष्टव्याय नमो नमः ॥ नित्यकालात्मने तुभ्यं नमः स्वाध्यायशालिने ॥ १४ ॥ नमः परमहंसाय नमः सत्त्वगुणाय ते ॥ स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ॥ १५ ॥ हरिर्देहभृतामात्मा परप्रकृतिरी-श्वरः ॥ त्वत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥१६॥ संसारसागरे घोरे विषयावर्त्तसंकुले ॥ अपारे दुस्तरेऽ-गाधे वर्त्तेऽहं कर्मभिः स्वकैः ॥ १७ ॥ अनाथमगतिं भीरु दयया परया हरे ॥ मामुद्धर दयासिन्धो संसा-राब्धेः सुदुस्तरात् ॥ १८ ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ॥ तत् क्षन्तव्यं प्रपन्नानामपराध-सहो ह्यसि ॥ १९ ॥ अपराधसहस्रभाजनं पतितं भीम-भवार्णवोदरे ॥ नगतिं शरणागतं हरे कृपया केवलमा-त्मसात्कुरु ॥२०॥ जन्मप्रभृति दासोऽस्मि शिष्योऽ-स्मि तनयोऽस्मि ते॥ त्वं च स्वामी गुरुर्माता पिता च मम माधव ॥२१॥ नाहं हित्वा प्रजानामि त्वां भजा-

म्येव केवलम् ॥ बुद्ध्वैवं मम गोविंदभक्त्युपायेन मां हरे ॥ २२ ॥ त्वां विना नान्यः प्रियो मे नेदं नेदमितीति च ॥ बुद्धिं नीतिं च मे देहि येन त्वामुपयाम्यहम् ॥२३॥ इति विज्ञाप्य देवेशं वैश्वदेव स्वधामनि॥ कुर्य्यात्पञ्चमहायज्ञानपि गृह्योक्तकर्मणा ॥२४॥ इत्यादिसमये तस्य कथितः कमलासनः ॥ वेदानां सारमुद्धृत्य सर्वांगमसमृद्धये ॥ २५ ॥ इति श्रीपञ्चरात्रागमे महोपनिषदि ब्रह्मतन्त्रे श्रीमदष्टाक्षरकल्पे जितन्तेस्तोत्रे पञ्चमोऽध्यायः ॥ ५ ॥ २८ ॥

# सुमंगलस्तोत्रम्

श्रीमते रामानुजाय नमः ॥ सुमङ्गलं मंगलमीश्वराय ते सुमंगलं मंगलमच्युताय ते ॥ सुमंगलं मङ्गलमन्तरात्मने सुमङ्गलं मङ्गलमब्जनाभ ते ॥१॥ सुमंगल श्रीनिलयोरुवक्षसे सुमङ्गलं पद्मभवादिसेविते ॥ सुमङ्गलं पद्मजगन्निवासिने सुमङ्गलं चाश्रितमुक्तिदायिने ॥ २॥ चाणूरदर्पघ्नसुबाहुदण्डयोः सुमङ्गलं मंगलमादिपूरुषे ॥ बालार्ककोटिप्रतिमाय ते विभो चक्राय दैत्येन्द्रविनाशहेतवे ॥ ३ ॥ शंखाय कोटीन्दुसमानतेजसे शार्ङ्गाय रत्नोज्ज्वलदिव्यरूपिणे॥ खड्गाय विद्यामयविग्रहाय ते सुमङ्गलं मंगलमस्तु ते विभो ॥ ४ ॥ तदावयोस्तत्व विशिष्टशेषिणे शेषित्वसम्बन्धनिबोधनाय ते॥ यन्मङ्ग-

लानां च सुमङ्गलाय ते पुनः पुनर्मङ्गलमस्तु सन्ततम् ॥ ८ ॥ इति श्रीविष्णुचित्तस्वामिकृतं सुमंगलस्तोत्रं सम्पूर्णम् ॥ २९ ॥

## गोपालविंशतिस्तोत्रम्

श्रीमते रामानुजाय नमः ॥ श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी॥वेदांताचार्य्यवर्यो मे सन्निधत्तां सदा हृदि ॥ १ ॥ वन्दे वृन्दावनचरं बल्लवीजनवल्लभम् ॥ जयन्तीसम्भवं धाम वैजयन्तीविभूषणम् ॥ २ ॥ वाचं निजाङ्करसिकां प्रसमीक्षमाणो वक्रारविंदविनिवेशितपाञ्चजन्यः ॥ वर्णत्रिकोणरुचिरे वरपुण्डरीके बद्धासनो जयति बल्लवचक्रवर्ती ॥ ३ ॥ आम्नायगंधरुचिरस्फुरिताधरोष्ठमास्राविलेक्षणमनुक्षणमन्दहासम् ॥ गोपालडिम्भवपुषं कुहनाजनन्याः प्राणस्तनंधयमवैमि परं पुमांसम् ॥ ४ ॥ आविर्भवत्यनिभृताभरणं पुरस्तादाकुञ्चितैकचरणं निहितान्यपादम् ॥ दध्ना निबद्धमुकुरेण निबद्धतालं नाथस्य नंदभवने नवनीतनाटयम् ॥ ५ ॥ कुन्दप्रसूनविशदैर्दशनैश्चतुर्भिः संदश्य मातुरनिशं कुचचूचुकाग्रम् ॥ नंदस्य वक्रमवलोकयतो मुरारेर्मन्दस्मितं मम मनीषितमातनोतु ॥६॥ हर्त्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ॥ पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन्मि-

थ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता ॥७॥ व्रज-
योषिदपाङ्गवेदनीयं मथुराभाग्यमनन्यभोग्यमीडे॥वसु-
देववधूस्तनंधयं तत् किमपि ब्रह्म किशोरभावदृश्यम्
॥ ८ ॥ परिवर्तितकन्धरं भयेन स्मितफुल्लाधरपल्लवं
स्मरामि॥विटपित्वनिरासकं कयोश्चिद्विपुलोलूखलक-
र्षकं कुमारम् ॥९॥ निकटेषु निशामयामि नित्यं निग-
मान्तैरधुनापि मृग्यमाणम् ॥ यमलार्जुनदृष्टबालकेलिं
यमुनासाक्षिकयौवतं युवानम् ॥१०॥ पदवीमदवीयसीं
विमुक्तेरटवीसम्पदमम्बुवाहयन्तीम्॥ अरुणाधरसाभि-
लाषवंशां करुणां कारणमानुषं भजामि ॥११॥ अनि-
मेषनिषेवणीयमक्ष्णोरजहद्यौवनमाविरस्तु चित्ते॥कल-
हायितकुन्तलं कलापैः करुणोन्मादकविभ्रमं मनो मे
॥१२॥अनुयायिमनोज्ञवंशनालैरवतु स्पर्शितवल्लवीवि-
मोघैः॥अनघस्मितशीतलैरसौमामनुकम्पासरिदम्बुजै-
रपाङ्गैः ॥१३॥ अधराहितचारुवंशनाला मुकुटालम्बि-
मयूरपिच्छमालाः ॥ हरिनीलशिलाविहङ्गलीलाः प्रति-
भास्वन्तु ममान्तिमप्रयाणे ॥१४॥ अखिलानवलोक-
यामि कालान्महिलादीनभुजान्तरस्य यूनः॥अभिला-
षपदं व्रजाङ्गनानामभिलापक्रमदूरमाभिरूप्यम् ॥१५॥
महसे महिताय मौलिना विनतेनाञ्जलिमञ्जनत्विषे ॥
कलयामि विमुग्धवल्लवीवलयाभाषितमञ्जुवेणवे॥१६॥
जयतु ललितनृत्यं शिक्षको वल्लवीनां शिथिलवलयसि

ञ्जाशीतलैर्हस्ततालैः ॥ अखिलभुवनरक्षागोपवेषस्य विष्णोरधरमणिसुधाया वंशवान्वंशनालः ॥ १७ ॥ चित्राकल्पश्श्रवसि कलयँल्लाङ्गलीकर्णपूरं बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः ॥ गुञ्जाबद्धामुरसि ललितां धारयन् हारयष्टिं गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ १८ ॥ लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्यामंसे देव्याः पुलकनिबिडे सन्निविष्टान्यबाहुः मेघश्यामो जयति ललितं मेखलादत्तवेणुर्गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ १९ ॥ प्रत्यालीढस्थितिमधिगतां प्राप्तगाढाङ्कपालीं पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः ॥ भस्त्रायन्त्रप्रणिहितकरो भक्तिजीवातुरव्यादारिक्रीडानिबिडवसनो बल्लवीवल्लभो नः ॥ २० ॥ वासो हृत्वा दिनकरसुतासन्निधौ बल्लवीनां लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ॥ सव्रीडाभिस्तदनु वसनं ताभिरभ्यर्थ्यमानः कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ २१ ॥ इत्यनन्यमनसा विनिर्मितां वेंकटेशकविना स्तुतिं पठन्॥ दिव्यवेणुरसिकैः समीक्षते दैवतं किमपि यौवतप्रियम् ॥ २२ ॥ इति गोपालविंशतिः सम्पूर्णा ॥ २३ ॥

## मूलरामायणम्

श्रीमते रामानुजाय नमः ॥ जयति रघुवंशतिलकः कौशल्याहृदयनन्दनो रामः ॥ दशवदननिधनकारी

दाशरथिः पुण्डरीकाक्षः ॥ १ ॥ कूजन्तं राम रामेति मधुरं मधुराक्षरम् ॥ आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥२॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः॥शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ३ ॥ यः पिबन् सततं रामचरितामृतसागरम् ॥ अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ४ ॥ गोष्पदीकृतवारीशं मशकीकृतराक्षसम् ॥ रामायणमहामाला रत्नं वन्देऽनिलात्मजम् ॥५॥ अञ्जनीनन्दनं वीरं जानकीशोकनाशनम् ॥ कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ ६ ॥ उल्लंघ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ॥ आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिरञ्जनेयम् ॥ ७ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ॥ वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥८॥ श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ॥ आजानुबाहुमरविन्ददलायताक्षं रामं निशाचरविनाशकरं नमामि ॥ ९ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे॥ वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥१०॥ शृण्वन् रामायणं भक्त्या य पादं पदमेव वा ॥ स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ११ ॥ यः कर्णाञ्जलिसंपुटैरहरहः सम्यक् पिबत्यादराद्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु॥जन्म

व्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं संसारं स विहाय गच्छति पुमान् विष्णोः पदं शाश्वतम् ॥ १२ ॥ तदुपगतसमाससन्धियोगंसममधुरप्रणतार्थवाक्यबद्धम्॥रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १३ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ॥ बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ १४ ॥ वाल्मीकिगिरिसंभूता रामसागरगामिनी ॥ पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥ जितं भगवता तेन हरिणा लोकधारिणा ॥ अजेन विश्वरूपेणनिर्गुणेन गुणात्मना ॥ १६ ॥ तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ॥ नारदं परिपप्रच्छ वाल्मीकिमुनिपुङ्गवम् ॥ १७ ॥ कोन्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान् ॥ धर्मज्ञश्च कृतज्ञश्च सत्यवाक्योदृढव्रतः ॥ १८ ॥ चारित्रेण च को युक्तः सर्वभूतेषु को हितः॥विद्वान् कः कः समर्थश्च कश्चैक प्रियदर्शनः ॥ १९ ॥ आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः॥ कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ २० ॥ एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥२१॥ श्रुत्वा चैतत्रिलोकज्ञो वाल्मीकेर्नारदो वचः ॥ श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ २२ ॥ बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ॥ मुने वक्ष्याम्यहं

बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥२३॥ इक्ष्वाकुवंशप्रभवो रामो
नाम जनैः श्रुतः ॥ नियतात्मा महावीर्यो द्युतिमान्
धृतिमान् वशी ॥२४॥ बुद्धिमान्नीतिमान् वाग्मी श्रीमान्
शत्रुनिबर्हणः ॥ विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः
॥ २५ ॥ महोरस्को महेष्वासो गूढजत्रुररिन्दमः ॥
आजानु बाहुः सुशिराः सुललाटः सुविक्रमः ॥ २६ ॥
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ॥ पीनवक्षा
विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ २७ ॥ धर्मज्ञः
सत्यसन्धश्च प्रजानां च हिते रतः ॥ यशस्वी ज्ञानसंपन्नः
शुचिर्वश्यः समाधिमान् ॥२८॥ प्रजापतिसमः श्रीमान्
धाता रिपुनिषूदनः ॥ रक्षिता जीवलोकस्य धर्मस्य
परिरक्षिता ॥ २९ ॥ रक्षिता स्वस्य धर्मस्य स्वजनस्य
च रक्षिता ॥ वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥३०॥
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ॥ सर्वलो-
कप्रियः साधुरदीनात्मा विचक्षणः ॥ ३१ ॥ सर्वदा-
भिगतः सद्भिः समुद्र इव सिन्धुभिः ॥ आर्यः सर्वसम-
श्चैव सदैव प्रियदर्शनः ॥३२॥ स च सर्वगुणोपेतः कौश-
ल्यानन्दवर्द्धनः ॥ समुद्र इव गाम्भीर्ये धैर्येण हिमवा-
निव ॥३३॥ विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ॥
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ ३४ ॥
धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥ तमेवं गुणसं-
पन्नं रामं सत्यपराक्रमम् ॥ ३५ ॥ ज्येष्ठं श्रेष्ठगुणैर्युक्तं

प्रियं दशरथः सुतम् ॥ प्रकृतीनां हितैर्युक्तं प्रकृतिप्रिय-
काम्यया ॥ ३६ ॥ यौवराज्येन संयोक्तुमैच्छत् प्रीत्या
महीपतिः ॥ तस्याभिषेकसंभारान् दृष्ट्वा भार्याथ कैकयी
॥३७॥ पूर्वं दत्तवरा देवी वरमेनमयाचत ॥ विवासनं
च रामस्य भरतस्याभिषेचनम् ॥३८॥ स सत्यवचना-
द्राजा धर्मपाशेन संयतः ॥ विवासयामास सुतं रामं
दशरथः प्रियम् ॥३९॥ स जगाम वनं वीरः प्रतिज्ञा-
मनुपालयन् ॥ पितुर्वचननिर्देशात् कैकेय्याः प्रियकार-
णात् ॥४०॥ तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम
ह ॥ स्नेहाद्विनयसम्पन्नः सुमित्रानंदवर्द्धनः ॥४१॥ भ्रातरं
दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ रामस्य दयिता
भार्य्या नित्यं प्राणसमाहिता ॥४२॥ जनकस्य कुले
जाता देवमायेव निर्मिता ॥ सर्वलक्षणसम्पन्ना नारीणा-
मुत्तमावधूः ॥ ४३ ॥ सीताप्यनुगता रामं शशिनं
रोहिणी यथा ॥ पौरैरनुगतो दूरं पित्रा दशरथेन च
॥ ४४ ॥ शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ॥ गुह-
मासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥४५॥ गुहेन
सहितो रामो लक्ष्मणेन च सीतया ॥ ते वनेन वनं गत्वा
नदीस्तीर्त्वा बहूदकाः ॥ ४६ ॥ चित्रकूटमनुप्राप्य भर-
द्वाजस्य शासनात् ॥ रम्यमावसथं कृत्वा रममाणा वने
त्रयः ॥ ४७ ॥ देवगन्धर्वसङ्काशास्तत्र ते न्यवसन्
सुखम् ॥ चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ॥४८॥

राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ॥ गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ४९ ॥ नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ॥ स जगाम वनं वीरो रामपादप्रसादकः ॥५०॥ गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ॥अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥५१॥ त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत्॥ रामोऽपिपरमोदारः सुमुखः सुमहायशाः ॥५२॥ नचैच्छत् पितुरादेशाद्राज्यं रामो महाबलः ॥ पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ॥५३॥ निवर्तयामास ततो भरतं भरताग्रजः॥स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ५४ ॥ नंदिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥ गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥ ५५ ॥ रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥ तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ ५६ ॥ प्रविश्य तु महारण्यं रामो राजीवलोचनः ॥ विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥५७॥ सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा॥अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥५८॥ खड्गं च परमप्रीतस्तूणी चाक्षय्यसायकौ ॥ वसतस्तस्य रामस्य वने वनचरैः सह ॥५९॥ ऋषयोऽभ्यगमन्सर्वे वधायासुररक्षसाम् ॥ स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥ ६० ॥ प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ॥

ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ६१ ॥ तेन तत्रैव वसता जनस्थाननिवासिनी ॥ विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥६२॥ ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् ॥ खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ ६३ ॥ निजघान रणे रामस्तेषां चैव पदानुगान् ॥ वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥६४॥ रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ॥ ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ ६५ ॥ सहायं वरयामास मारीचं नाम राक्षसम् ॥ वार्यमाणः सुबहुशो मारीचेन स रावणः ॥ ६६ ॥ न विरोधो बलवताक्षमो रावण तेन ते ॥ अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥६७॥ जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ६८ ॥ जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ गृध्रं च निहतं दृष्ट्वा हृतं श्रुत्वा च मैथिलीम् ॥ ६९ ॥ राघवः शोकसन्तप्तो विललापाकुलेन्द्रियः ॥ ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ७० ॥ मार्गमाणो वने सीतां राक्षसं संददर्श ह ॥ कबन्धं नामरूपेण विकृतं घोरदर्शनम् ॥ ७१ ॥ तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ॥ स चास्य कथयामास शबरीं धर्मचारिणीम् ॥७२॥ श्रमणां धर्मनिपुणामभिगच्छेति राघव ॥ सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥७३॥ शबर्या पूजितः सम्यग्रामो दशर-

थात्मजः ॥ पम्पातीरे हनुमता सङ्गतो वानरेण ह ॥७४॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ सुग्रीवाय च
तत्सर्वं शंसद्रामो महाबलः ॥ ७५ ॥ आदितस्तद्यथा
वृत्तं सीतायाश्च विशेषतः ॥ सुग्रीवश्चापि तत्सर्वं श्रुत्वा
रामस्य वानरः ॥७६॥ चकार सख्यं रामेण प्रीतश्चैवाग्नि
साक्षिकम् ॥ ततो वानरराजेन वैरानुकथनं प्रति ॥७७॥
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ प्रतिज्ञातं
च रामेण तदा वालिवधं प्रति ॥ ७८ ॥ वालिनश्च बलं
तत्र कथयामास वानरः ॥ सुग्रीवः शङ्कितश्चासीन्नित्यं
वीर्येण राघवे ॥ ७९ ॥ राघवप्रत्ययार्थं तु दुन्दुभेः
कायमुत्तमम् ॥ दर्शयामास सुग्रीवो महापर्वतसन्निभम्
॥ ८० ॥ उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महा-
बलः ॥ पादांगुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥८१॥
बिभेद च पुनस्तालान् सप्तैकेन महेषुणा ॥ गिरिं रसातलं
चैव जनयन् प्रत्ययं तदा ॥८२॥ ततः प्रीतमनास्तेन
विश्वस्तः स महाकपिः ॥ किष्किन्धां रामसहितो जगाम
च गुहां तदा ॥ ८३ ॥ ततो गर्जद्धरिवरः सुग्रीवो हेम-
पिङ्गलः ॥ तेन नादेन महता निर्जगाम हरीश्वरः ॥८४॥
अनुमान्य तदा तारां सुग्रीवेण समागतः ॥ निजघान च
तत्रैनं शरेणैकेन राघवः ॥ ८५ ॥ ततः सुग्रीववचना-
द्धत्वा वालिनमाहवे ॥ सुग्रीवमेव तद्राज्ये राघवः प्रत्य-
पादयत् ॥८६॥ स च सर्वान्समानीय वानरान् वानर-

र्षभः ॥ दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम्
॥ ८७ ॥ ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली ॥
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ८८ ॥ तत्र
लंकां समासाद्य पुरीं रावणपालिताम् ॥ ददर्श सीतां
ध्यायन्तीमशोकवनिकां गताम् ॥८९॥ निवेदयित्वा-
भिज्ञानं प्रवृत्तिं विनिवेद्य च ॥ समाश्वास्य च वैदेहीं
मर्दयामास तोरणम् ॥ ९० ॥ पञ्च सेनाग्रगान् हत्वा
सप्त मन्त्रिसुतानपि ॥ शूरमक्षं च निष्पिष्य ग्रहणंसमु-
पागमत् ॥ ९१ ॥ अस्त्रेणोन्मुक्तमात्मानंज्ञात्वा पैताम-
हाद्वरात् ॥ मर्षयन् राक्षसान्वीरोमन्त्रिणस्तान् यदृच्छ-
या ॥९२॥ ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथि-
लीम् ॥ रामाय प्रियमाख्यातुं पुनरायान् महाकपिः
॥९३॥ सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम्।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ९४ ॥ ततः
सुग्रीवसहितो गत्वा तीरं महोदधेः ॥ समुद्रंक्षोभयामास
शरैरादित्यसन्निभैः ॥९५॥ दर्शयामास चात्मानं समुद्रः
सरितां पतिः ॥ समुद्रवचनाच्चैव नलं सेतुमकारयत
॥ ९६ ॥ तेन गत्वा पुरीं लंकां हत्वा रावणमाहवे ॥
रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ९७ ॥
तामुवाच ततो रामः परुषं जनसंसदि ॥ अमृष्यमाणा
सा सीता विवेश ज्वलनं सती ॥९८॥ ततोऽग्निवचना-
त्सीतां ज्ञात्वा विगतकल्मषाम् ॥ कर्मणा तेन महता
त्रैलोक्यं सचराचरम् ॥ ९९ ॥ सदेवर्षिगणं तुष्टं राघ-

वस्य महात्मनः ॥ बभौ रामः सम्प्रहृष्टः पूजितः सर्व-
दैवतैः ॥ १०० ॥ अभिषिच्य च लङ्कायां राक्षसेन्द्रं
बिभीषणम् ॥ कृत्यकृत्यस्तदा रामो विज्वरःप्रमुमोद ह
॥१॥ देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ॥
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ २ ॥
भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ॥ भरतस्या-
न्तिके रामो हनूमन्तं व्यसर्जयत् ॥ ३ ॥ पुनराख्या-
यिकां जल्पन् सुग्रीवसहितस्तदा ॥ पुष्पकं तत्समारुह्य
नन्दिग्रामं ययौ तदा ॥ ४ ॥ नन्दिग्रामेजटां हित्वा
भ्रातृभिः सहितोऽनघः ॥ रामः सीतामनुप्राप्यराज्यं पुन-
रवाप्तवान् ॥५॥ प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधा-
र्मिकः ॥ निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥६॥
न पुत्रमरणं केचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् ॥ नार्य्यश्चा-
विधवा नित्यं भविष्यंति पतिव्रताः ॥ ७ ॥ न चाग्निजं
भयं किञ्चिन्नाप्सु मज्जंति जन्तवः ॥ न वातजं भयं
किञ्चिन्नापि ज्वरकृतं तथा ॥८॥ न चापि क्षुद्भयं तत्र
न तस्करभयं तथा ॥ नगराणि च राष्ट्राणि धनधान्ययु-
तानि च ॥ ९ ॥ नित्यं प्रमुदिताः सर्वे यथा कृतयुगे
तथा ॥ अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥११०॥
गवां कोटच्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् ॥ असं-
ख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥११॥ राज-
वंशान् शतगुणान् स्थापयिष्यति राघवः ॥ चातुर्वर्ण्यं

च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥१२॥ दश वर्ष-सहस्राणि दश वर्षशतानि च ॥ रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ १३ ॥ इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् । यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥१४॥ एतदाख्यानमायुष्यं पठन्रामायणं नरः ॥ सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ १५ ॥ पठन् द्विजो वागृषभत्वमीयात्स्यात् क्षत्रियो भूमिपतित्वमीयात्॥वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ १६ ॥ चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ॥ एकैकमक्षरं पुंसांमहापातकनाशनम् ॥१७॥ रामाय रामभद्राय रामचन्द्राय वेधसे ॥ रघुनाथाय नाथाय सीतायाः पतये नमः ॥११८॥ इतिश्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे नारदोक्तरामायणसंक्षेपो नाम प्रथमः सर्गः ॥ ३१ ॥

## अथ पांडवगीता प्रारम्भः

श्रीगणेशायनमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीरस्तु ॥ पांडव उवाच ॥ प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् ॥ रुक्माङ्गदार्जुनवसिष्ठबिभीषणादीन्पुण्यानिमान्परमभागवतान्स्मरामि ॥१॥ लोमहर्षण उवाच ॥ धर्मो विवर्द्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्त्तनेन ॥ शत्रुर्विनश्यति धनञ्जयकीर्त्तनेन माद्रीसुतो कथयतां न

भवन्ति रोगाः ॥ २ ॥ ब्रह्मोवाच ॥ ये मानवा विगतरागपरावरज्ञा नारायणं सुरगुरुं सततं स्मरन्ति ॥ ध्यानेन तेन हतकल्मषचेतनास्ते मातुः पयोधररसं न पुनः पिबन्ति ॥ ३ ॥ इन्द्र उवाच ॥ नारायणो नाम नरो नरायणं प्रसिद्धचौरः कथितः पृथिव्याम् । अनेकजन्मार्जितपापसंचयं हरत्यशेषं स्मरतां सदैव ॥ ४ ॥ युधिष्ठिर उवाच ॥ मेघश्याम पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ॥ पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥ ५ ॥ भीमसेन उवाच ॥ जलौघमग्ना सचराचरा धरा विषाणकोटचाखिलविश्वमूर्तिना ॥ समुद्धृता येन वराहरूपिणा-स मे स्वयम्भूर्भगवान्प्रसीदताम् ॥ ६ ॥ अर्जुन उवाच ॥ अचिन्त्यमव्यक्तमनन्तमव्ययं विभुं प्रभुं भावितविश्वभावनम् ॥ त्रैलोक्यविस्तारविचारकारकं हरिं प्रपन्नोऽस्मि गतिं महात्मनाम् ॥ ७ ॥ नकुल उवाच ॥ यदि गमनमधस्तात्कालपाशानुबद्धो यदि च कुलविहीने जायते पक्षिकीटे ॥ कृमिशतमपि गत्वा जायते चान्तरात्मा मम भवतु हृदिस्थे केशवे भक्तिरेका ॥ ८ ॥ सहदेव उवाच ॥ तस्य यज्ञवराहस्य विष्णोरतुलतेजसः ॥ प्रणामं ये प्रकुर्वन्ति तेषामपि नमो नमः ॥ ९ ॥ कुन्त्युवाच ॥ स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहम् ॥ तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढास्तु मे

॥ १० ॥ माद्र्युवाच ॥ कृष्णे रताः कृष्णमनुस्मरंति रात्रौ च कृष्णं पुनरुत्थिता ये ॥ ते भिन्नदेहाः प्रविशंति कृष्णं हविर्यथा मन्त्रहुतं हुताशम् ॥ ११ ॥ द्रुपद उवाच ॥ कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षः पिशाचमनुजेष्वपि यत्र तत्र ॥ जातस्य मे भवतु केशव त्वत्प्रसादात्त्वय्येव भक्तिरचलाव्यभिचारिणी च ॥ १२ ॥ सुभद्रोवाच ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ॥ दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥१३॥ अभिमन्युरुवाच ॥ गोविन्द गोविन्द हरे मुरारे गोविन्द गोविन्द मुकुन्द कृष्ण ॥ गोविंद गोविंद रथाङ्गपाणे गोविंद गोविंद नमो नमस्ते ॥१४॥ धृष्टद्युम्न उवाच ॥ श्रीरामनारायण वासुदेव गोविन्द वैकुण्ठ मुकुन्द कृष्ण ॥ श्रीकेशवानन्त नृसिंह विष्णो मां त्राहि संसारभुजङ्गदष्टम् ॥१५॥ सात्यकिरुवाच ॥ अप्रमेय हरे विष्णो कृष्ण दामोदराच्युत ॥ गोविन्दानन्द सर्वेश वासुदेव नमोऽस्तु ते ॥१६॥ उद्धव उवाच ॥ वासुदेवं परित्यज्य योऽन्यं देवमुपासते ॥ तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥ १७ ॥ धौम्य उवाच ॥ अपां समीपे शयनासनस्थितौ दिवा च रात्रौ च यथाधिगच्छता ॥ यद्यस्ति किञ्चित्सुकृतं कृतं मया जनार्दनस्तेन कृतेन तुष्यतु ॥ १८ ॥ संजय उवाच ॥ आर्ता विषण्णाः शिथिलाश्च

भीता घोरेषु च व्याधिषु वर्तमानाः ॥ संकीर्त्य नाराय-
णशब्दमात्रं विमुक्तदुःखा सुखिनो भवन्ति ॥ १९ ॥
अक्रूर उवाच ॥ अहं हि नारायणदासदासदासानुदासस्य
च दासदासः ॥ अस्त्यन्यईशो जगतो नराणां तस्मादहं
चान्यतरोऽस्मि लोके ॥२०॥ विदुर उवाच ॥ वासुदे-
वस्य ये भक्ताः शान्तास्तद्गतमानसाः ॥ तेषां दासस्य
दासोऽहमभूवं जन्मजन्मनि ॥ २१ ॥ भीष्म उवाच ॥
विपरीतेषु कालेषु परिक्षीणेषु बन्धुषु ॥ त्राहि मां कृपया
कृष्ण शरणागतवत्सल ॥ २२ ॥ द्रोणाचार्य उवाच ॥
ये ये हताश्चक्रधरेण राजंस्त्रैलोक्यनाथेन जनार्दनेन ॥ ते
ते नरा विष्णुपुरं प्रयाताः क्रोधोऽपि देवस्य वरेण तुल्यः
॥ २३ ॥ कृपाचार्य उवाच ॥ मज्जन्मनः फलमिदं मधु-
कैटभारे मत्प्रार्थनीयमदनुग्रह एष एव ॥ त्वद्भृत्यभृत्यप-
रिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ
॥ २४ ॥ अश्वत्थामोवाच ॥ गोविंद केशव जनार्दन
वासुदेव विश्वेश विश्व मधुसूदन विश्वनाथ ॥ श्रीपद्मनाभ
पुरुषोत्तम पुष्कराक्ष नारायणाच्युत नृसिंह नमो नमस्ते
॥ २५ ॥ कर्ण उवाच ॥ नान्ये वदामि न शृणोमि न चि-
न्तयामि नान्यं स्मरामि न भजामि न चाश्रयामि ॥
भक्त्या त्वदीयचरणांबुजमादरेण श्रीश्रीनिवास पुरुषो-
त्तम देहि दास्यम् ॥२६॥ धृतराष्ट्र उवाच ॥ नमो नमः
कारणवामनाय नारायणायामितविक्रमाय ॥ श्रीशार्ङ्गच-

क्राब्जगदाधराय नमोऽस्तु तस्मै पुरुषोत्तमाय ॥२७॥
गान्धार्युवाच ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव॥त्वमेवविद्या द्रविणंत्वमेव त्वमेव सर्वं मम देवदेव ॥ २८ ॥ द्रौपद्युवाच ॥ यज्ञेशाच्युत गोविंद माधवानन्त केशव ॥ कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥ २९ ॥जयद्रथ उवाच ॥ नमः कृष्णाय देवाय ब्रह्मणेऽनन्तमूर्तये॥योगेश्वराय योगाय त्वामहं शरणं गतः ॥ ३० ॥ विकर्ण उवाच ॥ कृष्णाय वासुदेवाय देवकीनंदनाय च॥नंदगोपकुमाराय गोविन्दाय नमो नमः ॥३१॥ सोमदत्त उवाच ॥ नमः परमकल्याण नमस्ते विश्वभावन ॥ वासुदेवाय शांताय यदूनां पतये नमः ॥३२॥ विराट उवाच ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविंदाय नमो नमः ॥३३॥ शल्य उवाच ॥ अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ये नमस्यंति गोविंदं न तेषां विद्यते भयम् ॥३४॥ बलभद्र उवाच ॥ कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव ॥ संसारार्णवमग्नानां प्रसीद पुरुषोत्तम ॥ ३५ ॥ श्रीकृष्ण उवाच ॥ कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः ॥ जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ ३६ ॥ सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहुर्यो मां मुकुंद नरसिंह जनार्दनेति॥ जीवो जपत्यनुदिनं मरणे रणे वा पाषाणकाष्ठसदृशाय

ददाम्यभीष्टम् ॥ ३७ ॥ सूत उवाच ॥ तत्रैव गङ्गा
यमुना च वेणी गोदावरी सिन्धुसरस्वती च ॥ सर्वाणि
तीर्थानि वसंति तत्र यत्राच्युतोदारकथाप्रसङ्गः ॥३८॥
यम उवाच ॥ नरके पच्यमानस्तु यमेन परिभाषितः ॥
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥३९॥
नारद उवाच॥जन्मान्तरसहस्रेणतपोध्यानसमाधिभिः॥
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ ४० ॥
प्रह्लाद उवाच॥नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्॥
तेषु तेष्वचला भक्तिरच्युतास्तु सदा त्वयि ॥ ४१ ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी॥ त्वामनुस्मरतः
सा मे हृदयान्नापसर्पतु ॥ ४२ ॥ विश्वामित्र उवाच ॥
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥
यो नित्यं ध्यायते देवं नराणां मनसि स्थितम् ॥४३॥
जमदग्निरुवाच॥नित्योत्सवः सदा तेषां नित्या श्रीर्नित्य
मङ्गलम् ॥ येषां हृदिस्थो भगवान्मंगलायतनो हरिः
॥४४॥ भरद्वाज उवाच ॥ लाभस्तेषां जयस्तेषां कुत-
स्तेषां पराजयः॥ येषामिन्दीवरश्यामो हृदयस्थो जना-
र्दनः ॥४५॥ गौतम उवाच ॥ गोकोटिदानं ग्रहणेषु
काशीप्रयागगंगायुतकल्पवासः ॥ यज्ञायुतं मेरुसुवर्ण-
दानं गोविंदनाम्ना न समं न तुल्यम् ॥ ४६ ॥ अत्रि-
रुवाच॥ गोविन्देति सदा स्नानं गोविन्देति सदा जपः॥
गोविन्देति सदाध्यानं सदा गोविन्दकीर्त्तनम् ॥४७॥

अक्षरं हि परं ब्रह्म गोविन्देत्यक्षरत्रयम् ॥ कस्मादुच्चारितं येन ब्रह्मभूयाय कल्पते ॥ ४८ ॥ श्रीशुक उवाच ॥ अच्युतःकल्पवृक्षोऽसावनन्तःकामधेनवः॥ चिंतामणिश्च गोविन्दो हरिनाम विचिन्तयेत् ॥४९॥ हरिरुवाच ॥ जयति जयति देवो देवकीनन्दनोयं जयति जयति-कृष्णो वृष्णिवंशप्रदीपः ॥ जयति जयति मेघश्यामलः कोमलांगो जयति जयति पृथ्वीभारनाशो मुकुन्दः ॥५०॥ पिप्पलायन उवाच ॥ श्रीमन्नृसिंहविभवे गरुडध्वजाय तापत्रयोपशमनाय भवौषधाय ॥ कृष्णायवृश्चिकजलाग्निभुजङ्गरोगक्लेशव्ययायहरयेगुरवे नमस्ते ॥ ५१ ॥ आविर्होत्र उवाच ॥ कृष्णत्वदीयपदपङ्कजपञ्जरान्ते अद्यैव मे विशतु मानसराजहंसः॥ प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥५२॥ विदुर उवाच॥ हरेर्नामैव नामैव नामैव मम जीवनम्॥कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥५३॥ वसिष्ठ उवाच ॥ कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते ॥ भस्मीभवन्ति तस्याशु महापातककोटयः ॥५४॥ अरुन्धत्युवाच ॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥५५॥ कश्यप उवाच ॥ कृष्णानुस्मरणादेव पापसंघातपञ्जरः॥ शतधा भेदमाप्नोति गिरिर्वज्रहतो यथा ॥५६॥ दुर्योधन उवाच ॥ जानामि धर्मं न

च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ॥ केनापिदेवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥५७॥ येन स्वगुणदोषेण क्षम्यतां मधुसूदनः ॥ अहमेवमहं हन्तुं मम दोषो न विद्यते ॥५८॥ भृगुरुवाच ॥ नामैव तव गोविंद नाम त्वत्तः शताधिकम् । ददात्युच्चरणान्मुक्तिं विनाप्यष्टाङ्गयोगतः ॥ ५९ ॥ लोमहर्षण उवाच ॥ नमामि नारायणपादपंकजं करोमि नारायणपूजनं सदा ॥ वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥६०॥ शौनक उवाच ॥ स्मृते सकलकल्याणभाजनं यत्र जायते ॥ पुरुषं तमजंनित्यं व्रजामि शरणं हरिम् ॥६१॥ गर्ग उवाच ॥ नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ॥ तथापि नरके घोरे पतन्तीत्येतदद्भुतम् ॥ ६२ ॥ दाल्भ्य उवाच ॥ किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ॥ नमो नारायणायेति मंन्त्रः सर्वार्थसाधकः ॥ ६३ ॥ वैशम्पायन उवाच ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ६४ ॥ अंगिरा उवाच ॥ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ॥ अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ ६५ ॥ पराशर उवाच ॥ सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥६६॥ पौलस्त्य उवाच ॥ हे जिह्वे रस-

सारज्ञे सर्वदा मधुरप्रिये॥नारायणाख्यपीयूषं पिब जिह्वे निरन्तरम् ॥६७॥ व्यास उवाच ॥ सत्यं सत्यं पुनः सत्यं भुजमुत्थाप्य चोच्यते ॥ न वेदाच्च परं शास्त्रं न देवः केशवात्परः ॥६८॥ धन्वन्तरिरुवाच ॥ अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ॥ नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम्॥६९॥मार्कण्डेय उवाच॥ सा हानिस्तन्महच्छिद्रं सा चान्धजडमूढता ॥ यन्मुहूर्तं क्षणं वापि वासुदेवं न चिन्तयेत् ॥ ७० ॥ अगस्त्य उवाच ॥ निमिषं निमिषार्द्धं वा प्राणिनां विष्णुचिन्तनम् ॥ क्रतुकोटिसहस्राणां ध्यानमेकं विशिष्यते ॥७१॥ मनसा कर्मणा वाचा ये स्मरन्ति जनार्दनम् ॥ तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं वनम् ॥७२॥ श्रीशुक उवाच ॥ आलोड्य सर्वशास्त्राणि विचार्यैव पुनः पुनः ॥इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ७३ ॥ श्रीमहादेव उवाच ॥ शरीरं च नवच्छिद्रं व्याधिग्रस्तं कलेवरम् ॥ औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः॥७४॥ शौनक उवाच॥ भोजनाच्छादनेचिन्तां वृथा कुर्वन्ति वैष्णवाः॥ योऽसौ विश्वम्भरो देवः स भक्तान् किमुपेक्षते ॥७५॥ एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ कीर्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम् ॥ ७६ ॥ सनत्कुमार उवाच ॥ यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनम् ॥ शंखः करतले यस्य स मे विष्णुः प्रसीदतु ॥७७॥ इदं

पवित्रमायुष्यं पुण्यं पापप्रणाशनम् ॥ यः पठेत्प्रातरु-
त्थाय वैष्णवं स्तोत्रमुत्तमम् ॥७८॥ सर्वपापविनिर्मुक्तो
विष्णुसायुज्यमाप्नुयात्॥ धर्मार्थकाममोक्षार्थं पाण्डवैः
परिकीर्तितम् ॥ ७९ ॥ आकाशात्पतितं तोयं यथा
गच्छति सागरम्॥ सर्वदेवनमस्कारः केशवं प्रतिगच्छति
॥ ८० ॥ इति श्रीपाण्डवकृतप्रपन्नगीता सम्पूर्णा ॥
श्रीकृष्णार्पणमस्तु ॥ शुभं भवतु ॥ ३२ ॥

## अथ विष्णोरष्टोत्तरशतस्थानानि

श्रीमते रामानुजाय नमः ॥ अष्टोत्तरशतस्थानेष्वा-
विर्भूतं जगत्पतिम्॥ नमामि जगतामीशं रामायणमन-
न्यधीः ॥१॥ श्रीवैकुण्ठे वासुदेवमामोदे कर्षणाह्वयम् ॥
प्रद्युम्नं च प्रमोदाख्ये संमोदे चानिरुद्धकम् ॥२॥ सत्य-
लोके तथा विष्णुं पद्माक्षं सूर्यमण्डले ॥ क्षीराब्धौ शेष-
शयनं श्वेतद्वीपे तु तारकम् ॥३॥ नारायणं बदर्याख्ये
नैमिषे हरिमव्ययम् ॥ शालग्राम हरिक्षेत्रे अयोध्यायां
रघूत्तमम् ॥४॥ मथुरायां बालकृष्णं मायायां मधुसू-
दनम्॥ काश्यां तु भोगशयनमवन्त्यामवनीपतिम्॥५॥
द्वारवत्यां यादवेन्द्रं व्रजे गोपीजनप्रियम्॥ वृन्दावने नन्द-
सूनुं गोविन्दं कालियह्रदे ॥६॥ गोवर्धने गोपवेषं भवघ्नं
भक्तवत्सलम्॥ रोमन्थपर्वते शौरिं हरिद्वारे जगत्पतिम्
॥७॥प्रयागे माधवं चैव गयायां तु गदाधरम् ॥ गङ्गा
सागरगे विष्णुं चित्रकूटे तु राघवम् ॥८॥ नन्दिग्रामे

राक्षसघ्नं प्रभासे विश्वरूपिणम् ॥ श्रीकूर्मे कूर्ममचलं नीलाद्रौ पुरुषोत्तमम् ॥ ९ ॥ सिंहाचले महासिंहं गदिनं तुलसीवने ॥ घृतशैले पापहरं श्वेताद्रौ सिंहरूपिणम् ॥१०॥ योगानन्दं धर्मपुर्यां काकुले त्वान्ध्रनायकम् ॥ अहोबले गारुडाद्रौ हिरण्यासुरमर्दनम् ॥११॥ विठ्ठलं पाण्डुरङ्गे तु वेंकटाद्रौ रमासखम् ॥ नारायणं यादवाद्रौ नृसिंहं घटिकाचले ॥ १२ ॥ वरदं वारणगिरौ कांच्यां कमललोचनम् ॥ यथोक्तकारिणं चैव परमेशपुराश्रयम् ॥ १३ ॥ पाण्डवानां तथा दूतं त्रिविक्रममथोन्नतम् ॥ कामासिक्यां नृसिंहं च तथाष्टभुजसंज्ञकम् ॥ १४ ॥ मेघाकारं शुभाकारं शेषाकारं तु शोभनम् ॥ अन्तरा शितिकण्ठस्य कामकोट्यां शुभप्रदम् ॥१५॥ कालमेघं खगारूढं कोटिसूर्यसमप्रभम् ॥ दिव्यं दीपप्रकाशं च देवानामधिपं मुने ॥१६॥ प्रवालवर्णं दीपाभं कांच्यामष्टादशस्थितम् ॥ श्रीगृध्रसरसस्तीरे भान्तं विजयराघवम् ॥ १७ ॥ वीक्षारण्ये महापुण्ये शयानं वीरराघवम् ॥ तोताद्रौ तुङ्गशयनं गजार्तिघ्नं गजस्थले ॥ १८ ॥ महाबलिं बलिपुरे भक्तिसारे जगत्पतिम् ॥ महावराहं श्रीमुष्णे महीन्द्रे पद्मलोचनम् ॥ १९ ॥ श्रीरङ्गे तु जगन्नाथं श्रीधामे जानकीप्रियम् ॥ सारक्षेत्रे सारनाथं खण्डने हरचापहम् ॥२०॥ श्रीनिवासस्थले पूर्णं सुवर्णं स्वर्णमन्दिरे ॥ व्याघ्रपुर्यां

महाविष्णुं भक्तिस्थाने तु भक्तिदम् ॥ २१ ॥ श्वेतह्रदे शान्तमूर्तिमग्निपुर्यां सुरप्रियम् ॥ भर्गाख्यं भार्गवस्थाने वैकुण्ठाख्ये तु माधवम् ॥ २२ ॥ पुरुषोत्तमे भक्तसखं चक्रतीर्थे सुदर्शनम् ॥ कुम्भकोणे चक्रपाणिं भूतस्थाने तु शार्ङ्गिणम् ॥ २३ ॥ कपिस्थले गजार्तिघ्नं गोविन्दं चित्रकूटके ॥ अनुत्तमं चोत्तमायां श्वेताद्रौ पद्मलोचनम् ॥ २४ ॥ पार्थस्थले परब्रह्म कृष्णकोटयां मधुद्विषम् नन्दपुर्यां महानन्दं वृद्धपुर्यां वृषाश्रयम् ॥२५॥ असङ्गसङ्गमग्रामे शरण्ये शरणं महत्॥दक्षिणद्वारकायां तु गोपालं जगतां पतिम् ॥ २६ ॥ सिंहक्षेत्रे महासिंहं मल्लारिं मणिमण्डपे ॥ निबिडे निबिडाकारं धानुष्के जगदीश्वरम् ॥ २७ ॥ मौहूरे कालमेघं तु मधुरायां तु सुन्दरम् ॥ वृषभाद्रौ महापुण्ये परमस्वामिसंज्ञकम् ॥ ॥ २८ ॥ श्रीमद्वरगुणे नाथं कुरुकायां रमासखम् ॥ गोष्ठीपुरे गोष्ठपतिं शयानं दर्भसंस्तरे ॥ २९ ॥ धन्वी मंगलके शौरिं बलाढ्यं भ्रमरस्थले ॥ कुरंगे तु तथा पूर्णं कृष्णमेकं वटस्थले ॥३०॥ अच्युतं क्षुद्रनद्यां तु पद्मनाभमनन्तके॥एतानि विष्णोः स्थानानि पूजितानि महात्मभिः ॥ ३१ ॥ अधिष्ठितानि देवेश तत्रासीन च माधवम् ॥ यः स्मरेत्सततं भक्त्या चेतसाऽनन्यगामिना ॥३२॥ स विधूयातिसंसारबन्धं याति हरेः पदम् ॥ अष्टोत्तरशतं विष्णोः स्थानानि पठति स्वयम् ॥३३॥ अधीताः सकला वेदाः कृताश्चविविधा मखाः॥सम्पा-

दिता तथा मुक्तिः परमानन्ददायिनी ॥३४॥ अवगाह्यानि तीर्थानि ज्ञातः स भगवान् हरिः ॥ आद्यमेतत्स्वयं व्यक्तं विमानं रंगसंज्ञकम् ॥ श्रीमुष्णं वेङ्कटाद्रिं च शालग्रामं च नैमिषम् ॥ ३५ ॥ तोताद्रिं पुष्करं चैव नरनारायणाश्रमम् ॥ अष्टौ मे मूर्तयःसन्ति स्वयं व्यक्ता महीतले ॥ ३६ ॥ श्रीकृष्णार्पणमस्तु ॥ ३३ ॥

## कनकधाराश्रीलक्ष्मीस्तवराजः

श्रीमते रामानुजाय नमः ॥ श्रीमान्वेङ्कटनाथार्य्यः कवितार्किककेसरी ॥ वेदान्ताचार्य्यवर्य्यो सन्निधत्तां सदा हृदि ॥१॥ ईशानां जगतोऽस्य वेंकटपतेर्विष्णोः पर प्रेयसीं त्वद्वक्षस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्द्धितीम् ॥ पद्मालंकृतपाणिपल्लवयुतां पद्मासनस्थां श्रियं वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ २ ॥ मानातीतप्रथितविभवां मङ्गलं मंगलानां वक्षःपीठीं मधुविजयिनो भूषयन्तीं स्वकान्त्या ॥ प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥३॥ आविर्भावः कलशजलधावध्वरे वापि यस्याः स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा ॥ भूमौ यस्या भुवनमखिलं देवि दिव्यं पदं वा स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम् ॥ ॥ ४ ॥ स्तोतव्यत्वं धिशति भवती देहिभिः स्तूयमाना तामेव त्वामतितरगतिः स्तोतुमाशंसमानः ॥ सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं सेवापेक्षा तव

चरणयोः श्रेयसे कस्य न स्यात् ॥५॥ यत्सङ्कल्पाद्भवति कमले यत्र देहिन्यमीषां जन्मस्थानप्रलयरचना जङ्गमाजङ्गमानाम् ॥ तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ पूर्णं तेजस्स्फुरति भवतीपादलाक्षारसाङ्कम् ॥ ६ ॥ निष्प्रत्यूहप्रणयघटितं देवि नित्यानपायं विष्णुस्त्वं चेत्यनवधिगुणैर्द्वन्द्वमन्योन्यलक्ष्यम् ॥ शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां सम्पद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ७ ॥ उद्देशत्वं जननि भजतोरुज्झितोपाधिगंधं प्रत्यग्रूपे हविषि युवयोरेकशेषित्वयोगात् ॥ पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणौ नावच्छेदं भजति महिमा नर्त्तयन्मानसं नः ॥८॥ पश्यन्तीषु श्रुतिषु परितः सूरिवृन्देन सार्द्धम्मध्ये कृत्यं त्रिगुणफलकं निर्मितस्थानभेदम् ॥ विश्वाधीशं प्रणयिनि सदा विभ्रमद्यूतवृत्तौ ब्रह्मेशाद्या दधति योरक्षसारप्रचारम् ॥ ९ ॥ अस्येसाना त्वमसि जगतः संश्रयन्ती मुकुन्दं लक्ष्मीः पद्मा जलधितनया विष्णुपत्नीन्दिरेति॥ यन्नामानि श्रुतिपरिमलान्येवमावर्त्तयन्तो नावर्त्तन्ते दुरित पवनप्रेरिते जन्मचक्रे ॥ १० ॥ त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं किन्तैरन्तःकलहमलिनैः किंचिदुत्तीर्य्य मग्नैः॥ तत्संप्रीत्यै विहरति हरौ सम्मुखीनां श्रुतीनां भावरूढौ भगवति युवां दैवतं दम्पती नः ॥ ११ ॥ आपन्नार्तिप्रशमनविधौ बद्धदीक्षस्य विष्णोराचख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम्॥

प्रादुर्भावैरपि समतनुः प्राप्तयुन्नीयसे त्वं दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरंगैः ॥ १२ ॥ धत्ते शोभां हरिमरकते तावकी मूर्तिराद्या तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा॥ यस्यां गच्छत्युदयबिलयैर्नित्यमानन्दसिन्धावुत्पद्यन्ते ललितलहरीविभ्रमं व्यक्तयस्ते ॥ १३ ॥ आसंसारं विततमखिलं वाङ्मयं यद्विभूतिर्यद्भ्रूभङ्गात्कुसुमधनुषः किङ्करो मेरुधन्वा ॥ यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः पद्मे तासां परिणतिरसौ भावलेशैस्त्वदीयैः ॥१४॥ अग्रे भर्तुः सरसिजमये भद्रपीठे निषण्णामम्भोराशेरधिगतसुधासंप्लवादुत्थितां त्वाम् ॥ पुष्पासारस्थगितभुवनैः पुष्कलावर्त्तकाद्यैर्दीप्तारम्भाः कनककलशैरभ्यषिञ्चन् गजेंद्राः ॥ १५ ॥ आलोक्य त्वाममृतसहजे विष्णुवक्षस्थलस्थां शापाक्रांताःशरणमगमन् सावरोधाः सुरेन्द्राः ॥ लब्ध्वा भूयस्त्रिभुवनमिदं रक्षितं त्वत्कटाक्षैः सर्वाकारस्थिरसमुदयां सम्पदं निर्विशन्ति ॥१६॥ आर्त्तत्राणव्रतिभिरमृतासारनिम्नाम्बुवाहैरम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः॥यस्यां यस्यां दिशि विहरते देवि दृष्टिस्त्वदीया तस्यां तस्यामहमहमिकां तन्वते सम्पदीर्घाः ॥ १७ ॥ योगारम्भत्वरितमनसो युष्मदेकान्तयुक्तं धर्मं प्राप्तं प्रथममिह ये धारयन्ते धनाय ॥ तेषां भूमेर्धनमतिगृहादम्बरादम्बुधेर्वा धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम् ॥ १८ ॥ श्रेयस्कामाः कमलनिलये चित्रमाम्नायवाचां चूडापीठं

तवपदयुगं चेतसा धारयन्तः ॥ छत्रच्छायासुभगशिर-
सश्चामरस्मेरपार्श्वाः श्लाघाशब्दश्रवणमुदितास्स्रग्विण-
स्सञ्चरन्ति ॥१९॥ ऊरीकर्त्तुंकुशलमखिलंजेतुमादीनरा-
तीन् दूरीकर्त्तुं दुरितमखिलं त्यक्तुमाद्यामविद्याम्॥ब्रह्म-
स्तम्भावधिकजननं ग्रामसीमान्तरेखामालम्बन्ते विम-
लमनसो विष्णुकान्ते दयान्ते॥२०॥ जाताकांक्षा जननि
युवयोरेकसेवाधिकारे मायालीढं विभवमखिलं मन्यमा-
नास्तृणाय ॥ प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो
भजन्ते वेलाभङ्गप्रशमनमलं वैदिकं धर्मसेतुम् ॥२१॥
सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते सिद्धिक्षेत्रं
शमितविपदां सम्पदां पादपद्मम् ॥ यस्मिन्नीष-
न्नमितशिरसो ज्ञापयित्वा शरीरं वर्तिष्यन्ते वितमसित-
पदे वासुदेवस्य धन्यः ॥ २२ ॥ सानुप्रायप्रकटितदयैः
शान्तवात्सल्यदिग्धैरम्भः स्निग्धैरमृतलहरीलब्धसद्-
ब्रह्मचर्य्यैः ॥ घर्मे तापत्रयविरचिते गाढतप्तं क्षणं मामाकिं-
चन्यग्लपितमनघैराद्रियेथाः कटाक्षैः ॥२३॥ सम्प-
द्यन्ते भवभयतमीभानवस्त्वत्प्रसादाद्भावास्सर्वे भगवति
हरौ भक्तिमुद्वेलयन्तः ॥ याचे किन्त्वामहमिह यतः
शीतलोदारशीलां भूयो भूयो दिशसि महतां मङ्गलानां
प्रबन्धान् ॥२४॥ माता देवि त्वमसि कमले वासुदेवः
पिता मे जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः॥
दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं किन्ते भूयः
प्रियमिति किल स्मेरवक्त्रा विभासि ॥२५॥ कल्याणा-

नामविकलनिधिः कापि कारुण्यसीमा नित्यामोदा निगमवचसां मौलिमन्दारमाला ॥ सम्पद्दिव्या मधुविजयिनः सन्निधत्तां सदा मे सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥२६॥ उपचितगुरुभक्तेरुत्थितं वेङ्कटेशात् कलिकलुषनिवृत्त्यै कल्प्यमानं प्रजानाम् ॥ सरसिजनिलयायाःस्तोत्रमेतत्पठन्तःसकलकुशलसीमाःसार्वभौमा भवन्ति ॥ २७ ॥ कवितार्किकसिंहाय कल्याणगुणशालिने ॥ श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥२८॥ इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्य्यस्य कृतिषु कनकधाराश्रीलक्ष्मीस्तवराजः सम्पूर्णः ॥ ३४ ॥

## अथ रामानुजसुप्रभातम्

श्रीमते रामानुजाय नमः ॥ पूर्णार्य पूर्णकरुणापरिलब्धबोधवैराग्यभक्तिसुखदिव्यगुणामृताब्धे॥श्रीयामुनार्य पदपङ्कजराजहंस रामानुजार्य भगवंस्तव सुप्रभातम्॥१॥ आनेतुमद्य वरदस्य गजाद्रिभर्तुः पानीयमच्छमतिशीतमगाधकूपात्॥ ध्वान्तं निरस्तमरुणस्य करैः समन्ताद्रामानुजार्य भगवंस्तव सुप्रभातम् ॥२॥ श्रीरङ्गराजपदपङ्कजयोरशेषकैङ्कर्यमाकलयितुं सकुतूहलस्त्वम् ॥ उत्तिष्ठ नित्यविधिमप्यखिलं च कर्तुं रामानुजार्य भगवंस्तव सुप्रभातम् ॥ ३ ॥ श्री भाष्यमालिखितुमत्र विशाललेख्यः श्रीवत्सचिह्नगुरुरानतदिव्यगात्रः॥ वेदा-

न्तसूत्रमपि वक्तुममुष्य सर्वं मा त्तिष्ठ लक्ष्मणमुने तव सुप्रभातम् ॥४॥ गद्यत्रयं निगमशेखरदीपसारं श्रुत्यर्थसंग्रहमपि प्रथितं च नित्यम्॥गीतार्थं भाष्यमपि देशिकपुङ्गवानां दातुं प्रसीद यतिशेखर सुप्रभातम् ॥ ५ ॥ अराधनं रचियितुं कमलासखस्य श्रीयादवाचलपतेर्विविधोपचारैः ॥ पातुं च दृष्टि कमलेन नतानशेषान् रामानुजार्य भगवंस्तव सुप्रभातम् ॥६॥ श्रीमान्संपूर्णपट्टरादरतः प्रगृह्य श्रीपादुके यतिपतेः पदयोः प्रयोक्तुम् ॥ द्वारि स्थितिं विदधते विनतार्तिहारिन् रामानुजार्य भगवंस्तव सुप्रभातम् ॥ ७ ॥ काषायवस्त्रकटिसूत्रकमण्डलूंश्च श्रीदन्तकाष्ठमपि देशिकसार्वभौम ॥ पाणौ निधाय निवसन्ति विशुद्धगात्रा रामानुजार्य भगवंस्तव सुप्रभातम् ॥८॥ स्नातुं कुबेरतनयासलिलेषु शिष्यैराचार्यपूरुषवरैर्यतिभिर्विशुद्धैः ॥ श्रीवैष्णवैश्चविबुधैः सह सेव्यमान रामानुजार्य भगवंस्तव सुप्रभातम् ॥ ९ ॥ ब्राह्मेबिबुध्य विबुधाःस्वगुरून्प्रणम्य रामानुजार्य नम इत्यसकृद्ब्रुवाणाः॥ अष्टाक्षर सचरमं द्वयमुच्चरन्ति रामानुजार्य भगवंस्तव सुप्रभातम् ॥१०॥ संसेव्यसप्तशतसंयमिसार्वभौमैस्सद्देशिकैः सकलशास्त्रविदां वरिष्ठैः ॥ एकान्तिभिःपरमभागवतैर्निषेव्य रामानुजार्य भगवंस्तव सुप्रभातम् ॥११॥ प्रातः पठन्ति परमद्रविडप्रपन्नगायत्रमन्त्रशतमष्टशिरस्कमर्थान् ॥ श्रीवैष्णवास्तव पदाब्ज निर्दिष्टभारा रामानुजार्य भगवंस्तव सुप्रभातम् ॥१२॥

इत्यादरेण सततं शुभसुप्रभातं ये मानवाः परिपठन्ति गुरुप्रभावम् ॥ ते यांति विष्णुपदवीं निजजन्मनाशाद्रामानुजार्य पदपङ्कजयोः प्रभावात् ॥ १३ ॥ व्यासो वा भगवान् पराशरमुनिःश्रीशौनको वाथवा साक्षान्नारदसंयमी शठरिपुर्वागीश्वरो वा स्वयम् ॥ लोकेशः पुरुषोत्तमः फणिपतिः शेषो जगच्छेषिण इत्याख्यो जगतां हिताय समभूद्रामानुजार्यो मुनिः ॥१४॥ इति रामानुजसुप्रभातं सम्पूर्णम् ॥ ३९ ॥ श्रीरामकृष्णार्पणमस्तु ॥

## अथवैराग्यपञ्चकम्

श्रीमते रामानुजाय नमः ॥ शिलं किमनलं भवेदनलमौदरं बाधितुंपयःप्रसृतिपूरकं किमु न धारकं सारसम्॥ अयत्नमलमल्पकं पथि पटच्चरं कच्चरं भजन्ति विबुधा मुधा अहह कुक्षितः कुक्षितः ॥ १ ॥ दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः ॥ यदञ्जनाभं निरपायमन्ति नो धनञ्जयस्यन्दनभूषणं धनम् ॥२॥ काचाय नीचं कमनीयवाचामोचाफलस्वादमुचा न याचे ॥ दयाकुचेले धनदत्कुचेले स्थितेऽकुचेले श्रितमाकुचेले ॥३॥ क्षोणीकोणशतांशपालनखलद्दुर्वारगर्वानलक्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनांधन्यां न मन्यामहे ॥ देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा धानामुष्टिमुचे कुचेलमुनये धत्ते स्म वित्तेशताम् ॥ ४ ॥ शरीरपतनावधि प्रभुनिषेवणापादनादबिन्धनधनञ्जयप्रसमदं धनं दन्धनम् ॥ धनंजयविवर्धनं धनमुदूढगोवर्धनंसुसाधन-

मबाधनं सुमनसां समाराधनम् ॥ ५ ॥ इति श्रीसर्वतन्त्रस्वतन्त्रवेदान्तदेशिकाचार्यकृतं वैराग्यपञ्चकं समाप्तम् ॥ ३६ ॥

## अथ नारायणवर्मप्रारम्भः

श्रीरङ्गेशाय नमः॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ अथ नारायणवर्मप्रारम्भः ॥ राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥ भगवंस्त-न्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाऽऽततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते॥नारायणाख्यं वर्माऽऽह तदीहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः॥कृतस्वाङ्ग-करन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥४॥ नारायण-मयं वर्म सन्नह्येद्भय आगते ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥ मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ॐनमो नारायणायेति विपर्ययमथापि वा ॥ ६ ॥ करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ प्रण-वादियकारान्तमंगुल्यंगुष्ठपर्वसु ॥ ७ ॥ न्यसेद्धृदयमो-ङ्कारं विकारमनुमूर्द्धनि ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ॥ वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसंधिषु ॥८॥ मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद्बुधः ॥ सविसर्गं फडन्त तत्सर्वदिक्षु विनिर्दिशेत् ॥ ९ ॥ ओंविष्णवे नमः

इति ॥ आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम्॥ विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥ १० ॥ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ॥ दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ ११ ॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥ स्थलेषु मायाबटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥१२॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः॥ विमुञ्चतोयस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥१३॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोऽद्रिकूटेष्वथविप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान्॥१४॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् ॥ दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥१५॥ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात् ॥ देवर्षिवर्यः पुरुषार्चनान्तरात् कूर्मो हरिर्मां निरयादशेषात् ॥१६॥ धन्वन्तरिर्भगवान् पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनान्ताद्बलो गणात् क्रोधवशादहीन्द्रः॥१७॥ द्वैपायनोभगवानप्रबोधाद्बुद्धस्तु पाखण्डगणात्प्रमादात् ॥ कल्किः कलेःकालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥१८॥ मां केशवो गदया प्रातरव्याद्गोविन्द आसंगवमात्तवेणुः ॥ नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ १९ ॥ देवोऽप-

राह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ॥
दोषेहृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः
॥ २० ॥ श्रीवत्सधामाऽपररत्र ईशः प्रत्यूष ईशोऽसि-
धरो जनार्दनः ॥ दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वे-
श्वरो भगवान् कालमूर्तिः ॥ २१ ॥ चक्रं युगान्तानल-
तिग्मनेमि भ्रमत्समन्ताद्भगवत्प्रयुक्तम् ॥ दन्दग्धि दन्द-
ग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥२२॥
गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजित-
प्रियोऽसि ॥ कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय
चूर्णयारीन् ॥२३॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचः
विप्रग्रहघोरदृष्टीन् ॥ दरेन्द्र विद्रावयकृष्णपूरितो भीम-
स्वनोऽरेर्हृदयानि कम्पयन् ॥ २४ ॥ त्वं तिग्मधारा-
सिवरारिसैन्यमीशप्रयुक्तों मम छिन्धि छिन्धि॥चक्षूंषि
चर्मन् शतचन्द्र च्छादय द्विषामघोनां हर पापचक्षुषाम्
॥ २५ ॥ यन्नोभयं ग्रहेभ्यो भूतकेतुभ्यो नृभ्य एव
च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यस्तथा अंहोभ्य एव वा॥२६॥
सर्वाण्येतानि भगन्नामरूपास्त्रकीर्तनात् ॥ प्रयान्तु संक्षयं
सद्यो ये नः श्रेयः प्रतीपकाः ॥ २७ ॥ गरुडो भगवां-
स्तोत्रस्तोभश्छन्दोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो
विष्वक्सेनः स्वनामभिः ॥२८॥ सर्वापद्भ्यो हरेर्नाम-
रूपयानायुधानि नः ॥ बुद्धीन्द्रियमनः प्राणान् पान्तु
पार्षदभूषणाः ॥ २९ ॥ यथा हि भगवानेव वस्तुतः
सदसच्च यत् ॥ सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः

॥३०॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ॥ भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३१ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ॥ पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥३२॥ विदिक्षु दिक्षूर्ध्वमधः समन्तदान्तर्बहिर्भगवान्नारसिंहः ॥ प्रहापयँल्लोकभय स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥३३॥ मघवन्निदमाख्यातं वर्मनारायणात्मकम् ॥ विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥ ३४ ॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ॥ पदा वा संस्पृशेत्सद्य साध्वसात्स विमुच्यते ॥ ३५ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ॥ राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥३६॥ इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः ॥ योगधारणया स्वाङ्गं जहौ स मरु धन्वनि ॥ ३७ ॥ तस्योपरि विमानेन गन्धर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥३८॥ गगनान्न्यपतत्सद्यः सविमानोह्यवाक्शिराः ॥ स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ ३९ ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ श्रीशुक उवाच ॥ य इदं शृणुयात्काले यो धारयति चादृतः ॥ तं नमस्यन्ति भूतानि मुच्यते सर्वतोभयात् ॥ ४० ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४१॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां षष्ठस्कन्धे

नारायणवर्मकथनं नामाष्टमोऽध्यायः ॥ ८ ॥ ३७ ॥
श्रीकृष्णार्पणमस्तु ॥

## अथ रामस्तवराजप्रारम्भः

श्रीरङ्गेशाय नमः ॥ ॐ अस्य श्रीरामचन्द्रस्तवराज-
स्तोत्रमन्त्रस्य ॥ सनत्कुमारऋषिः ॥ अनुष्टुप्छंदः ॥
श्रीरामो देवता ॥ सीताबीजम् ॥ हनूमान् शक्तिः ॥ श्री-
रामप्रीत्यर्थे जपे विनियोगः ॥ १ ॥ सूत उवाच ॥ सर्वशा-
स्त्रार्थतत्त्वज्ञं व्यासं सत्यवतीसुतम् ॥ धर्मपुत्रः प्रहृष्टात्मा
प्रत्युवाच मुनीश्वरम् ॥ २ ॥ युधिष्ठिर उवाच ॥ भगवन्
योगिनां श्रेष्ठ सर्वशास्त्रविशारद ॥ किं तत्त्वं किं परं जाप्यं
किं ध्यानं मुक्तिसाधनम् ॥ ३ ॥ श्रोतुमिच्छामि तत्सर्वं
ब्रूहि मे मुनिसत्तम ॥ वेदव्यास उवाच ॥ धर्मराज महाभाग
शृणु वक्ष्यामि तत्त्वतः ॥ ४ ॥ यत्परं यद्गुणातीतं यज्ज्यो-
तिरमलं शिवम् ॥ तदेव परमं तत्त्वं कैवल्यपदकारणम्
॥ ५ ॥ श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम् ॥ ब्रह्म-
हत्यादिपापघ्नमिति वेदविदो विदुः ॥ ६ ॥ श्रीराम रामेति
जना ये जपन्ति च सर्वदा ॥ तेषां भुक्तिश्च मुक्तिश्च भवि-
ष्यति न संशयः ॥ ७ ॥ स्तवराजं पुरा प्रोक्तं नारदेन
च धीमता ॥ तत्सर्वं संप्रवक्ष्यामि हरिध्यानपुरःसरम्
॥ ८ ॥ तापत्रयाग्निशमनं सर्वाघौघनिकृन्तनम् ॥ दारि-
द्र्यदुःखशमनं सर्वसंपत्करं शिवम् ॥ ९ ॥ विज्ञानफलदं
दिव्यं मोक्षैकफलसाधनम् ॥ नमस्कृत्य प्रवक्ष्यामि रामं

कृष्णं जगन्मयम् ॥१०॥ अयोध्यानगरे रम्ये रत्नसण्डपमध्यमे ॥ स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् ॥ ११ ॥ तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम् ॥ स्मरेन्मध्ये दाशरथिं सहस्रादित्यतेजसम् ॥१२॥ पितुरङ्कगतं राममिंद्रनीलमणिप्रभम् ॥ कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम् ॥१३॥ भानुकोटिप्रतीकाशं किरीटेन विराजितम् ॥ रत्नग्रैवेयकेयूरं रत्नकुण्डलमण्डितम् ॥ १४॥ रत्नकङ्कणमञ्जीरकटिसूत्रैरलंकृतम् ॥ श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितम् ॥ १५ ॥ दिव्यरत्नसमायुक्तं मुद्रिकाभिरलंकृतम् ॥ राघवंद्विभुजं बालं राममीषत्स्मिताननम् ॥ १६ ॥ तुलसीकुंदमंदारपुष्पमाल्यैरलंकृतम् ॥ कर्पूरागुरुकस्तूरीदिव्यगंधानुलेपनम् ॥१७॥ योगशास्त्रेष्वभिरतं योगीश योगदायकम् ॥ सदाभरतसौमित्रिशत्रुघ्नैरुपशोभितम् ॥ १८ ॥ विद्याधरसुराधीशसिद्धगंधर्वकिन्नरैः ॥ योगींद्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम् ॥ १९ ॥ विश्वामित्रवसिष्ठादिमुनिभिः परिसेवितम् ॥ सनकादिमुनिश्रेष्ठैर्योगिवृंदैश्च सेवितम् ॥२०॥ रामं रघुवरं वीरं धनुर्वेदविशारदम् ॥ मङ्गलायतनं देवं रामं राजीवलोचनम् ॥२१॥ सर्वशास्त्रार्थतत्त्वज्ञमानन्दकरसुंदरम् ॥ कौशल्यानंदनं रामं धनुर्बाणधरं हरिम् ॥२२॥ एवं संचिंतयन्विष्णुं यज्ज्योतिरमलं विभुम् ॥ प्रहृष्टमानसो भूत्वा मुनिवर्य्यः स नारदः ॥२३॥ सर्वलोकहितार्थाय तुष्टाव रघुनंदनम् ॥

कृताञ्जलिपुटो भूत्वा चिन्तयन्नद्भुतं हरिम् ॥ २४ ॥
यदेकं यत्परं नित्यं यदनन्तं चिदात्मकम् ॥
यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम् ॥ २५ ॥
विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम् ॥
श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि
॥२६॥ कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमी-
शितारम् । अणोरणीयांसमनन्तवीर्यं प्राणेश्वरं राममसौ
ददर्श ॥२७॥ नारद उवाच ॥ नारायणं जगन्नाथमभि-
रामं जगत्पतिम् ॥ कविं पुराणं वागीशं रामं दशरथात्म-
जम् ॥ २८ ॥ राजराजं रघुवरं कौसल्यानन्दवर्धनम् ॥
भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम् ॥२९॥ सत्यं
सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम् ॥ सौमित्रिपूर्वजं
शांतं कामदं कमलेक्षणम् ॥ ३० ॥ आदित्यं रविमी-
शानं घृणिं सूर्यमनामयम् ॥ आनन्दरूपिणं सौम्यं
राघवं करुणामयम् ॥३१॥ जामदग्न्यं तपोमूर्तिं रामं
परशुधारिणं ॥ वाक्यपतिं वरदं वाच्यं श्रीपतिं पक्षिवा-
हनम् ॥ ३२ ॥ श्रीशार्ङ्गधारिणं रामं चिन्मयानन्दवि-
ग्रहम् ॥ हलधृग्विष्णुमीशानं बलरामं कृपानिधिम्
॥ ३३ ॥ श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम् ॥
मत्स्यकूर्मवराहादिरूपधारिणमव्ययम् ॥ ३४ ॥ वासु-
देवं जगद्योनिमनादिनिधनं हरिम् ॥ गोविन्दं गोपतिं

विष्णुं गोपीजनमनोहरम् ॥ ३५ ॥ गोगोपालपरीवार गोपकन्यासमावृतम् ॥ विद्युत्पुञ्जप्रतीकाशं रामं कृष्णं जगन्मयम् ॥३६॥ गोगोपिकासमाकीर्णं वेणुवादनतत्परम् ॥ कामरूपं कलावंतं कामिनीकामदं विभुम् ॥ ॥ ३७ ॥ मन्मथं मथुरानाथं माधवं मकरध्वजम् ॥ श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम् ॥ ३८ ॥ भूतेशं भूपतिं भद्रं विभूतिं भूतिभूषणम् ॥ सर्वदुःखहरं वीरं दुष्टदानववैरिणम् ॥ ३९ ॥ श्रीनृसिंहं महाबाहुं महान्तं दीप्ततेजसम् ॥ चिदानन्दमयं नित्यं प्रणवज्योतिरूपिणम् ॥४०॥ आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम् ॥ भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् ॥४१॥ कौशल्येयं कलामूर्तिं काकुत्स्थं कमलाप्रियम् ॥ सिंहासने समासीनं नित्यव्रतमकल्मषम् ॥४२॥ विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम् ॥ यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम् ॥ ४३ ॥ सत्यसंधं जितक्रोधं शरणागतवत्सलम् ॥ सर्वक्लेशापहरणं बिभीषणवरप्रदम् ॥४४॥ दशग्रीवहरं रौद्रं केशवं केशिमर्दनम् ॥ वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम् ॥४५॥ नरवानरदेवैश्च सेवितं हनुमत्प्रियम् ॥ शुद्धं सूक्ष्मं परं शांतं तारकं ब्रह्मरूपिणम् ॥ ४६ ॥ सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम् सर्वकारणकर्त्तारं निदानं प्रकृतेः परम् ॥४७॥ निरामयं

निराभासं निरवद्यं निरञ्जनम् ॥ नित्यानन्दं निराकारम-
द्वैतं तमसः परम् ॥४८॥ परात्परतरं तत्त्वं सत्यानन्दं
चिदात्मकम्॥मनसा शिरसा नित्यं प्रणमामिरघूत्तमम्॥
॥ ४९ ॥ सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम् ॥
नमामि पुण्डरीकाक्षममेयं गुरुतत्परम् ॥५०॥ नमोऽस्तु
वासुदेवाय ज्योतिषां पतये नमः ॥ नमोऽस्तु रामदेवाय
जगदानन्दरूपिणे ॥५१॥ नमो वेदान्तनिष्ठाय योगिने
ब्रह्मवादिने ॥ मायामयनिरस्ताय प्रपन्नजनसेविने॥५२॥
वन्दामहे महेशानं चण्डकोदण्डखण्डनम्॥जानकीहृद-
यानन्दचन्दनं रघुनन्दनम् ॥५३॥ उत्फुल्लामलकोमलो-
त्पलदलश्यामाय रामाय ते कामाय प्रमदामनोहरगुण-
ग्रामाय रामात्मने ॥ योगारूढमुनीन्द्रमानससरोहंसाय
संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः
॥५४॥ भवोद्भवं वेदविदां वरिष्ठमादित्यचन्द्रानलसुप्र-
भावम् ॥ सर्वात्मकं सर्वगतस्वरूपं नमामि रामं तमसः
परस्तात् ॥५५॥ निरञ्जनं निष्प्रतिमं निरीहं निराश्रयं
निष्कलमप्रपञ्चम् ॥ नित्यं ध्रुवं निर्विषयस्वरूपं निरन्तरं
राममहं भजामि ॥ ५६ ॥ भवाब्धिपोतं भरताग्रजं तं
भक्तप्रियं भानुकुलप्रदीपम् ॥ भूतत्रिनाथं भुवनाधिपत्यं
भजामि रामं भवरोगवैद्यम् ॥५७॥ सर्वाधिपत्यं समरे
गभीरं सुत्यं चिदानन्दमयस्वरूपम्॥सत्यं शिवं शान्ति-

मयं शरण्यं सनातनं राममहं भजामि ॥ ५८ ॥ कार्य-
क्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम् ॥ कुमा-
रवेद्यं करुणामयं तं कल्पद्रुमं राममहं भजामि ॥५९॥
त्रैलोक्यनाथं सरसीरुहाक्षं दयानिधिं द्वन्द्वविनाशहेतुम् ॥
महाबलं देवनिधिं सुरेशं सनातनं राममहं भजामि ॥६०॥
वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमा-
द्यम् ॥ अगोचरं निर्मलमेकरूपं नमामि रामं तमसः
परस्तात् ॥ ६१ ॥ अशेषवेदात्मकमादिसंज्ञमजं हरिं
विष्णुमनन्तमाद्यम् ॥ अपार संवित्सुखमेकरूपं परात्परं
राममहं भजामि ॥ ६२ ॥ तत्त्वस्वरूपं पुरुषं पुराणं
स्वतेजसा पूरितविश्वमेकम् ॥ राजाधिराजं रविमण्ड-
लस्थं विश्वेश्वरं राममहं भजामि ॥६३॥ लोकाभिरामं
रघुवंशनाथं हरिं चिदानन्दमयं मुकुंदम् ॥ अशेषविद्या-
धिपतिं कवीन्द्रं नमामि रामं तमसः परस्तात् ॥६४॥
योगीन्द्रसंघैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवम् ॥
नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः पर-
स्तात् ॥६५॥ विभूतिदं विश्वसृजं विराजं राजेन्द्रमीशं
रघुवंशनाथम् ॥ अचिन्त्यमव्यक्तमनन्तमूर्तिं ज्योतिर्मयं
राममहं भजामि ॥६६॥ अशेषसंसारविकारहीनमादि-
त्यगं पूर्णसुखाभिरामम् ॥ समस्तसाक्षिं तमसः परस्ता-
न्नारायणं विष्णुमहं भजामि ॥६७॥ मुनीन्द्रगुह्यं परि-
पूर्णकामं कलानिधिं कल्मषनाशहेतुम् ॥ परात्परं यत्प-

रमं पवित्रं नमामि रामं महतो महान्तम् ॥६८॥ ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा॥ आदित्यादिग्रहा-श्चैव त्वमेव रघुनंदन ॥ ६९ ॥ तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा॥ विप्रा वेदास्तथा यज्ञाः पुराणं धर्मसंहिताः ॥ ७० ॥ वर्णाश्रमास्तथा धर्मा वर्णधर्मा-स्तथैव च॥ यक्षराक्षसगन्धर्वा दिक्पाला दिग्गजादिभिः ॥७१॥ सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुङ्गव॥ वसवोऽष्टौ त्रयः काला रुद्रा एकादश स्मृताः ॥७२॥ तारका दश चैवाशास्त्वमेव रघुनन्दन ॥ सप्तद्वीपा-समुद्राश्च नगा-नद्यस्तथा द्रुमाः ॥७३॥ स्थावरा जङ्गमाश्चैव त्वमेव रघुनायक ॥ देवतिर्यङ्मनुष्याणां दानवानां तथैव च ॥ ७४ ॥ माता पिता तथा भ्राता त्वमेव रघुवल्लभ ॥ सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ॥७५॥ त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तम॥त्वमेव तारकं ब्रह्म त्वत्तो-ऽन्यन्नैव किंचन॥७६॥शान्तं सर्वगतं सूक्ष्मं परं ब्रह्म सना-तनम्॥ राजीवलोचनं रामं प्रणमामि जगत्पतिम्॥७७॥ व्यास उवाच ॥ ततः प्रसन्नः श्रीरामः प्रोवाच मुनिपुङ्ग-वम्॥तुष्टोऽस्मि मुनिशार्दूल वृणीष्व वरमुत्तमम्॥७८॥ नारद उवाच॥यदितुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे॥ त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहं च सर्वदा ॥७९॥ धन्यो-ऽहं कृतकृत्योऽहं पुण्योऽहं पुरुषोत्तम ॥ अद्य मे सफलं

जन्म जीवितं सफलं च मे ॥८०॥ अद्य मे सफलं ज्ञानमद्य मे सफलं तपः॥अद्य मे सफलं जन्म त्वत् पदाम्भोजदर्शनात् ॥ ८१ ॥अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा॥ त्वत्पादाम्भोरुहद्वन्द्वसद्भक्तिं देहि राघव ॥८२॥ ततः परमसंप्रीतो रामः प्राह स नारदम् ॥ श्रीराम उवाच ॥ मुनिवर्य महाभागा मुने त्विष्टं ददामि ते ॥ यत्त्वया चेप्सितं सर्वं मनसा तद्भविष्यति ॥८३॥ नारद उवाच ॥वरं न याचे रघुनाथ युष्मत्पदाब्जभक्तिः सततं ममास्तु ॥ इदं प्रियं नाथ वरं प्रयाचे पुनः पुनस्त्वामिदमेव याचे ॥ ८४ ॥ व्यास उवाच ॥ इत्येवमीडितो रामः प्रादात्तस्मै वरान्तरम्॥विरराम महातेजाःसच्चिदानंदविग्रहः ॥८५॥ अद्वैतममलं ज्ञानं त्वन्नामस्मरणं तथा ॥ अन्तर्धाय जगन्नाथः पुरतस्तस्य राघवः ॥ ८६ ॥ इति श्रीरघुनाथस्य स्तवराजमत्युत्तमम् ॥ सर्वसौभाग्यसंपत्तिदायकं मुक्तिदं शुभम् ॥ ८७ ॥ कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम् ॥ गुह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकीर्तितम् ॥८८॥ यः पठेच्छृणुयाद्वापि त्रिसन्ध्यं श्रद्धयान्वितः ॥ ब्रह्महत्यादिपापानि तत्समानि बहूनि च ॥८९॥ स्वर्णस्तेयसुरापानगुरुतल्पयुतानि च॥गोवधाद्युपपापानि ह्यनृतादिभवानि च ॥ ९० ॥ सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः ॥

मानसं वाचिकं पापं कर्मणा समुपार्जिम् ॥ ९१ ॥ श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम् ॥ इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ॥९२॥ रामः सत्यं परं ब्रह्म रामात्किंचिन्न विद्यते ॥ तस्माद्रामस्वरूपां हि सत्यं सत्यमिदं जगत् ॥९३॥ श्रीरामचन्द्र रघुपुङ्गव राजवर्य राजेन्द्र राम रघुनायक राघवेश ॥ राजाधिराज रघुनन्दन रामभद्र दासोऽहमद्य भवतः शरणागतोऽस्मि ॥९४॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ॥ अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनीन्द्रैः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ९५ ॥ रामं रत्नकिरीटकुण्डलयुतं केयूरहारान्वितं सीतालंकृतवामभागममलं सिंहासनस्थं विभुम् ॥ सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यमानं सदा विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुम् ॥ ९६ ॥ सकलगुणनिधानं योगिभिः स्तूयमानं भुजविजितसमानं राक्षसेंद्रादिमानम् ॥ अहितनृपभयानं सीतया शोभमानं स्मृतहृदयविमानं ब्रह्म रामाभिधानम् ॥९७॥ रघुवर तव मूर्तिर्मामके मानसाब्जे नरकगतिहरं ते नामधेयं मुखे मे ॥ अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे भवजलनिधिमग्नं रक्ष मामार्तबंधो ॥ ९८ ॥ रामरत्नमहं वन्दे चित्रकूट-

पतिं हरिम् ॥ कौशल्याशुक्तिसंभूतं जानकीकण्ठभूषणम् ॥ ९९ ॥ इति श्रीसनत्कुमारसंहितायां नारदोक्तश्रीरामचंद्रस्तवराजस्तोत्रं सम्पूर्णम् ॥ ३८ ॥

## अथ प्रातर्निवेदनकारिकाः

श्रीमते रामानुजाय नमः ॥ श्रीगणेशाय नमः ॥ उत्थाय शयने तस्मिन्नासीनो नियतेंद्रियः ॥ त्रस्तनिर्विण्णहृदयो व्यर्थं वीक्ष्य गतं वयः ॥ १ ॥ तापत्रयेण चाक्रान्तस्तीव्रेणाध्यात्मिकादिना॥दावजेनाग्निना लीढो भ्राम्यन्निव वने मृगः ॥ २ ॥ संसारवागुरांतस्थो लूनपक्ष इवाण्डजः ॥ अपश्यन्निर्गमोपायमागामिष्वपि जन्मसु ॥ ३ ॥ अकर्यैरतिबीभत्सैः क्रियमाणैः कृतैरपि ॥ लज्जितश्च विषण्णश्च स्मर्यमाणैः स्वकर्मभिः ॥ ॥४॥ अविनीतमशिक्षार्हमसद्गुणगणाकरम्॥अवधार्य स्वमात्मानमचिकित्स्याशुभाश्रयम् ॥ ५ ॥ दह्यमानेन्धनांतस्थो विस्फुरन्निव कीटकः ॥ अलब्धनिर्गमस्तिष्ठन्मध्ये मरणजन्मनोः ॥ ६ ॥ विह्वलश्च विषण्णश्च विमृगन्स्वामिमां दशाम् ॥ चिंतयेत्प्रथमं चैवमाचारप्रियमात्मनः ॥ ७ ॥ संसारचक्रमारोप्य बलिभिः कर्मरज्जुभिः ॥ कालेनाकृष्यमाणस्य जङ्गमस्थावरात्मनः ॥८॥ अहो मे महती याता निष्फला जन्मसंततिः ॥ अनाराधितगोविंदचरणाम्भोरुहद्वया ॥ ९ ॥ अनास्वा-

दितसत्कर्मज्ञानभक्तिसुधारसा ॥ अदृष्टनन्तसंसारसाग-
रोत्तारणप्लुवा ॥ १० ॥ श्रुतिस्मृत्युदिताशेषसदाचारप-
राङ्मुखी ॥ त्यक्तवर्णसमाचारा भ्रष्टा वैदिकवर्त्मनः
॥ ११ ॥ अनुपासितसद्वृद्धास्वीकृतासत्समागमा ॥
असम्पादितशुश्रूषा गुर्वाचार्यपितृष्वपि ॥१२॥ निज-
कर्मजदेवादिदेहाध्यस्तात्मभावना॥ तद्भावनानुगोद्भूत-
सुखदुःखव्यवस्थितिः ॥ १३ ॥ असंभूतस्वयाथात्म्य-
ज्ञानजोत्तमनिर्वृतिः ॥ पशुवत्प्राकृतैरेव गुणैरधिकनि-
र्वृता ॥ १४ ॥ न कर्मनिष्ठा नात्मज्ञा नापि भक्तियुता
हरौ॥ नोद्युक्ता भक्तिहीनत्वात्तत्क्रियास्वर्चनादिषु॥१५॥
कर्मभिः पुण्यपापाख्यैरविद्यापरनामभिः ॥ धूमैरिवार्चि-
रग्नेयं ज्ञानमावृत्य देहिनः ॥ १६ ॥ भूषयित्वा स्वकं
देहं शब्दाद्यैः स्वार्जितैर्गुणैः ॥ दर्शयित्वा स्वसौन्दर्यमा-
त्मने तिष्ठमानया ॥ १७॥ निरस्तातिशयाह्लादसुखभा-
वैकलक्षणम् ॥ संच्छाद्य स्वगुणैरेवं स्वरूपं परमात्मनः
॥ १८ ॥ गुणमय्या प्रकृत्याख्यभगवन्माययानया ॥
स्वसँल्लीनानन्तजीवकृतकर्मानुरूपया ॥१९॥ गुणत्रया-
श्रयानन्तविचित्रपरिणामया ॥ अतिदुस्तरयादेवप्रपत्ति-
रहितात्मभिः ॥२०॥ प्रलोभ्यमाना सततं तयैवात्य-
न्तनिर्वृता ॥ अजानतीव स्वहितं मूकस्वप्नानुकारिणी
॥ २१ ॥ निष्पानीये निरालम्बे निच्छाये निरुपाश्रये ॥

द्राघीयस्यशुभे मार्गे यमस्य सदनं प्रति ॥ २२ ॥ गच्छतो मेऽसहायस्य वर्द्धयन्ती भयं महत्॥अतीतापि सदैवैषा तिष्ठतीव पुरो मम ॥ २३ ॥ गतायास्त्वीदृशं रूपं वर्तमानेऽपि जन्मनि॥ तथैव सुमहान्कालोगतक्षण इवाल्पकः ॥ २४ ॥ अलब्धसुखसंस्पर्शमकृताघौघनिष्कृतिः ॥ विनैव हरिपादार्चामहो पश्यत एव मे ॥२५॥ किं करिष्यामि पदयोर्निपतिष्यामि कस्य वा ॥ २६ ॥ इत उर्ध्वमहं तावद्यावज्जीवं श्रियःश्रियः ॥ पदयोरर्चनं कर्तुं यतमानः समाहितः ॥२७॥ अभिगच्छन्हरिं प्रातः पश्चाद् द्रव्याणि चार्जयन् ॥ अर्चयंश्च ततो देवं ततो मन्त्राञ्जपन्नपि ॥ २८ ॥ ध्यायन्नपि परं देवं कालेषूक्तेषु पञ्चसु ॥ वर्तमानः सदा चैव पाञ्चकालिकवर्त्मना ॥२९॥ स्वार्जितैर्गन्धपुष्पाद्यैः शुभैः शक्त्यनुरूपतः॥ आराधयन्हरिं भक्त्या गमयिष्यामि वासरान् ॥३०॥ इति वेदान्तचार्यवि० प्रातर्नि०कारिकाः समाप्ताः॥३१॥

# अथ दशावतारस्तोत्रम्

देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां रंगे धामनिलब्धनिर्भररसैरध्यक्षितो भावुकैः ॥यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका॥ १॥निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैरन्तस्तन्वदिवारविन्द महना

ओदन्वतीस्ता अपः ॥ निष्प्रत्यूहतरङ्गरिङ्खणमिथःप्रत्यू-
ढपाथश्छटाडोलारोहसदोहलं भगवतो मात्स्यंवपुः पातु
नः ॥ २ ॥ अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निश्वासवातोर्मयः ॥ यद्वि-
क्षेपणसंकृतोदधिपयः प्रेंखोलपर्यङ्किकानित्यारोहणनि-
र्वृतो विरहते देवः सहैव श्रिया ॥ ३ ॥ गोपायेदनिशं
जगन्ति कुहनापोत्री पवित्रीकृतब्रह्माण्डप्रलयोर्मिघोषगु-
रुभिर्घोणारवैर्घुर्घुरैः ॥ यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्क-
म्पनित्यस्थितिर्ब्रह्मस्तम्बमसौदसौ भगवतीमुस्तेवविश्व-
म्भरा ॥४॥ प्रत्यादिष्टपुरातनप्रहरणग्रामक्षणं पाणिजै-
रव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः। यत्प्रा-
दुर्भवनादवन्ध्यजठरायादृच्छिकाद्वेधसां या काचित्स-
हसा महासुरगृहस्थूणापितामह्यभूत् ॥५॥ व्रीडाविद्धवदा-
न्यदानवयशोनासीरधाटीभटस्त्रैयक्षं मुकुटं पुनन्नवतु नस्त्रै
विक्रमो विक्रमः ॥ यत्प्रस्तावसमुच्छ्रितध्वजवटीवृत्तान्त-
सिद्धान्तिभिस्स्रोतोभिः सुरसिन्धुरष्टसु दिशासौरेषु दोधू
यते ॥६॥ क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन्
क्रमादक्षत्रामिह संततक्षय इमां त्रिस्सप्तकृत्वः क्षितिम् ॥
दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्न-
ब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥७॥ पारावा-
रपयो विशोषणकलापारीणकालानलज्वालाजालविहा-
रहारिविशिखव्यापारघोरक्रमः ॥ सर्वावस्थसकृत्प्रपन्नज-

नतासंरक्षणैकव्रती धर्मोविग्रहवानधर्मविरतिं धन्वी सधन्वीतु नः ॥ ८ ॥ पक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादयस्तालाङ्कास्यतथाविधाविहृतयस्तन्वन्तुभद्राणि नः ॥ क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैराकौमारकमस्वदन्तजगते कृष्णस्य ताः केलयः ॥९॥ नाथायैव नमः पदं भवतु नश्चित्रैश्चरित्रक्रमैर्भूयोभिर्भुवनान्यमूनिकुहनागोपाय गोपायते ॥ कालिन्दीरसिकायकालियफणिस्फारस्फटावाटिकारङ्गोत्सङ्गविशङ्कचक्रमधुराषर्याय चर्यायते ॥१०॥ भाविन्या दशयाभवन्निह भवध्वंसाय नः कल्पतां कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलंकषः ॥ निःशेषक्षतकण्टके क्षितितले धारा जलौघे ध्रुवं धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥११॥ इच्छामीनविहारकच्छप महापोत्रिन् यदृच्छाहरे रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् क्रीडाबल्लव कल्कवाहन दशाकल्किन्निति प्रत्यहं जल्पन्तः पुरुषाः पुनन्तु भुवनं पुण्यौघपण्यापणः ॥ १२॥ विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गलं देवेशस्यदशावतारविषयं स्तोत्रं विवक्षेत यः । वक्रं तस्य सरस्वती बहुमुखी भक्तिः परा मानसे शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥ १३ ॥ कवितार्किकसिंहाय कल्याणगुणशालिने ॥ श्रीमते वेङ्कटेशाय वेदान्तगुरवेनमः ॥ इति दशावतारस्तोत्रं संपूर्णम् ॥ ४० ॥

# अथ शालिग्रामस्तोत्रप्रारम्भः

अथ श्रीशालिग्रामस्तोत्रमंत्रस्य श्रीभगवान् ऋषिः नारायणो देवता देवीगायत्री च्छन्दः शालिग्रामस्तोत्रमन्त्रजपे विनियोगः ॥ युधिष्ठिरउवाच ॥ श्रीदेवदेव देवेश देवतार्चनमुत्तमम् । तत्सर्वं श्रोतुमिच्छामि ब्रूहि मे पुरुषोत्तम ॥ १ ॥ श्रीभगवानुवाच॥गण्डक्यां चोत्तरे तीरे गिरिराजस्य दक्षिणे ॥ दशयोजनविस्तीर्णा महाक्षेत्रा वसुंधरा ॥ २ ॥ शालिग्रामोऽभवद्देवो देवो द्वारावती भवेत् ॥ उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः॥ ३॥ शालिग्रामशिला यत्र यत्र द्वारावती शिला ॥ उभयोः संगमो यत्र मुक्तितत्र न संशयः ॥ ४ ॥ आजन्मकृतपापानां प्रायश्चित्तं य इच्छति ॥ शालिग्रामशिलावारि पापहारि नमोऽस्तु ते ॥५॥ अकालमृत्युहरणं सर्वव्याधिविनाशनम् ॥ विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥६॥ शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि ॥ अङ्गलग्नं मनुष्याणां ब्रह्महत्यादिकं दहेत्॥७॥ स्नानोदकं पिबेन्नित्यं चक्रांकितशिलोद्भवम् ॥ प्रक्षाल्य इति तत्तोयं ब्रह्महत्यां व्यपोहति ॥८॥ अग्निष्टोमसहस्राणि वाजपेयशतानि च ॥ सम्यक् फलमवाप्नोति विष्णोर्नैवेद्यभक्षणात् ॥ ९ ॥ नैवेद्ययुक्तां तुलसीं च मिश्रितां विशेषतः पादजलेन विष्णोः ॥ यः स्नाति

नित्यं पुरतो मुरारेः प्राप्नोतियज्ञायुतकोटिपुण्यम् ॥१०॥
खण्डिताः स्फुटिता भिन्ना अग्निदग्धास्तथैवच ॥ शालि-
ग्रामशिला यत्र तत्र दोषो न विद्यते ॥११॥ न मन्त्रः
पूजनं नैव न तीर्थं न च भावना ॥ न स्तुतिर्नोपचारश्च
शालिग्रामशिलार्चने ॥१२॥ ब्रह्महत्यादिकं पापं मनो-
वाक्कायसंभवम् ॥ शीघ्रं नश्यति तत्सर्वं शालिग्रामशि-
लार्चनात् ॥१३॥ नानावर्णाभयं चैव नाना भोगेन वेष्टि-
तम् ॥ तथा वरप्रसादेन लक्ष्मीकांतं वदाम्यहम् ॥१४॥
नारायणोद्भवो देवश्चक्रमध्ये च कर्मणा ॥ तथा वरप्रसा-
देन लक्ष्मीकान्तं वदाम्यहम् ॥१५॥ कृष्णे शिलातले
यत्र सूक्ष्मं चक्रं सुदृश्यते ॥ सौभाग्यं सन्ततिं दत्ते सर्व-
सौख्यं ददाति च ॥ १६ ॥ वासुदेवस्य चिह्नानि दृष्ट्वा
पापैः प्रमुच्यते ॥ श्रीधरः सुकरे वामे हरिवर्णस्तु दृश्यते
॥१७॥ वाराहरूपिणंदेवं कूर्माङ्गैरपि चिह्नितम् ॥ गोपदं
तत्र दृश्येत वाराहं वामनं तथा ॥ १८ ॥ पीतवर्णस्तु
देवानां रक्तवर्णं भयावहम् ॥ नरसिंहो भवेद्देवो मोक्षदं च
प्रकीर्तितम् ॥ १९ ॥ शंकचक्रगदाकूर्माः शंखो यत्र
प्रदृश्यते ॥ शंखवर्णस्य देवानां वामे देवस्य लक्षणम् ॥
॥२०॥ दामोदरं तथा स्थूलं मध्येचक्रं प्रतिष्ठितम् ॥
पूर्णद्वारेण संकीर्णा पीतरेखा च दृश्यते ॥२१॥ छत्रा-
कारे भवेद्राज्यं वर्तुले च महाश्रियः ॥ चपटे च महद्दुःखं

शूलाग्रे तु रणं ध्रुवम् ॥ २२ ॥ ललाटे शेषभोगस्तु शिरोपरि सुकाञ्चनम् ॥ चक्रकाञ्चनवर्णानां वामदेवस्य लक्षणम् ॥ २३ ॥ वामपार्श्वे च वै चक्रे कृष्णवर्णस्तु पिंगलम् ॥ लक्ष्मीनृसिंहदेवानां पृथग्वर्णस्तु दृश्यते ॥ २४ ॥ लम्बोष्ठे च दरिद्रं स्यात्पिङ्गलेहानिरेव च ॥ लग्नचक्रे भवेद्व्याधिर्विदारे मरणं ध्रुवम् ॥२५॥ पादोदकं च निर्माल्यं मस्तके धारयेत्सदा ॥ विष्णोर्दृष्टं भक्षितव्यं तुलसीदलमिश्रितम् ॥२६॥ कल्पकोटिसहस्राणि वैकुण्ठे वसते सदा ॥ शालिग्रामशिलाबिन्दुर्हत्याकोटिविनाशनः ॥ २७ ॥ तस्मात्संपूजयेद्ध्यात्वा पूजितं चापि सर्वदा ॥ शालिग्रामशिलास्तोत्रं यः पठेच्च द्विजोत्तमः ॥ २८ ॥ स गच्छेत्परमं स्थानं यत्र लोकेश्वरो हरिः ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ २९ ॥ दशावतारो देवानां पृथग्वर्णस्तु दृश्यते ॥ ईप्सितं लभते राज्यं विष्णु पूजामनुक्रमात् ॥३०॥ कोट्यो हि ब्रह्महत्यानामगम्यागम्यकोटयः ॥ ताः सर्वा नाशमायान्ति विष्णुनैवेद्यभक्षणात् ॥ ३१ ॥ विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् ॥ तस्मादष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥३२ इति श्रीभवि० गण्ड० श्रीकृष्णयु० शालिग्रामस्तोत्रं सम्पूर्णम् ॥ ४१ ॥

## अथ दयाशतकप्रारम्भः

श्रीमते रामानुजाय नमः ॥ प्रपद्ये तं गिरिं प्रायः

श्रीनिवासानुकम्पया ॥इक्षुसारस्रवन्त्येव यन्मूर्त्या शर्क-
रायितम् ॥१॥ निगमे तीर्थबहुलां शीतलां गुरुसन्त-
तिम् ॥ श्रीनिवासदयाम्भोधिपरीवाहपरम्पराम् ॥२॥
कृतिनः कमलावासकारुण्यैकान्तिनो भजे ॥ धत्ते यत्सू
क्तिरूपेण त्रिवेदी सर्वयोग्यताम् ॥ ३ ॥ पराशरमुखा-
न्वन्दे भागीरथनये स्थितान्॥ कमलाकान्तकारुण्यग-
ङ्गाप्लावितमद्विधान् ॥४॥ अशेषविघ्नशमनमनीकेश्वर-
माश्रये ॥ श्रीमतः करुणाम्भोधौ शिक्षास्रोत इवोत्थि-
तम् ॥५॥ समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम् ॥
श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम् ॥६॥ वन्दे
वृषगिरीशस्य महिषीं विश्वधारिणीम् ॥ तत्कृपाप्रतिघा-
तानां क्षमया वारणं यया ॥७॥ निशामयतु मां नीला
यद्भोगपटलैर्ध्रुवम् ॥ भावितं श्रीनिवासस्य भक्तदोषेष्व-
दर्शनम् ॥८॥ कमप्यनवधिं वन्दे करुणावरुणालयम् ॥
वृषशैलतटस्थानां स्वयं व्यक्तमुपागतम् ॥९॥ अकि-
ञ्चननिधिं सूतिमपवर्गत्रिवर्गयोः॥ अञ्जनाद्रीश्वरदयाम-
भिष्टौमि निरञ्जनाम् ॥१०॥ अनुचरशक्त्यादिगुणाम-
ग्रेसरबोधविरचितालोकम् ॥ स्वाधीनवृषगिरिशां स्वयं
प्रभूतां प्रमाणयामि दयाम् ॥११॥ अपि निखिललो-
कसुचरितमुष्टिन्धयदुरितमूर्च्छानाजुष्टम्॥संजीवयतु दये
मामञ्जनगिरिनाथरञ्जनी भवति ॥१२॥ भगवति दये
भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे॥अप्रतिघमज्जनान

हस्तालम्बो मदागसां मृग्यः ॥१३॥ कृपणजनकल्प-
लतिकां कृतापराधस्य निष्क्रियामाद्याम् ॥ वृषगिरिना-
थदये त्वां विदन्ति संसारतारणीं विबुधाः ॥१४॥ वृष-
गिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः ॥ दोषा
भवेयुरेते यदि नाम दये त्वया विना भूताः ॥ १५ ॥
आसृष्टिसंततानामपराधानां विरोधिनी जगतः ॥ पद्मा-
सहायकरुणे प्रतिसंचरकेलिमाचरसि ॥१६॥ अचिद-
विशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा॥ करणक-
लेवरयोगं वितरसि वृषशैलनाथकरुणे त्वम् ॥ १७ ॥
अनुगुणदशार्पितेन श्रीधरकरुणे समाहितस्नेहा॥ शम-
यसि तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन ॥ १८ ॥
रूढावृषाचलपते पादे मुखकान्तिपत्रलच्छाया॥ करुणे
सुखयसि विनतान्कटाक्षविटपैः करापचेयफलैः ॥१९॥
नयने वृषाचलेन्दोस्तारामैत्रीं दधानया करुणे ॥ दृष्ट-
स्त्वयैव जनिमानपवर्गमकृष्टपच्यमनुभवति ॥ २० ॥
समयोपनतैस्तव प्रवाहैरनुकम्पे कृतसंप्लवा धरित्री ॥
शरणागतसस्यमालिनीयं वृषशैलेशकृषीवलं धिनोति
॥२१॥ कलशोदधिसम्पदो भवत्याः करुणे सन्मति-
मन्थसंस्कृतायाः ॥ अमृतांशुमवैमि दिव्यदेहं मृतस-
ञ्जीवनमञ्जनाचलेन्दोः ॥२२॥ जलधेरिव शीतता दये
त्वं वृषशैलाधिपतेः स्वभावभूता ॥ प्रलयारभटीनटी
तदीक्षां प्रसभं ग्राहयसि प्रसक्तिलास्यम् ॥२३ प्रणत-

प्रतिकूलमूलघाती प्रतीघःकोऽपि वृषाचलेश्वरस्य ॥ कमले यवसापचायनीत्या करुणे किंकरतां तवोपयाति ॥ २४ ॥ अबहिष्कृतनिग्रहान् विदन्तः कमलाकान्तगुणान् स्वतंत्रतादीन् ॥अविकल्पमनुग्रहं दुहानां भवतीमेव दये भजन्ति संतः ॥ २५ ॥ कमलानिलयस्त्वया दयालुः करुणे निष्करुणा निरूपणे त्वम् ॥ अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेकभीतिः ॥२६॥ अतिलंघितशासनेष्वभीक्ष्णं वृषशैलाधिपतिर्जृम्भितोष्मा ॥ पुनरेवदयेक्षमानिदानैर्भवतीमाद्रियते भवत्यधीनैः ॥२७॥ करुणे दुरितेषु मामकेषु प्रतिकारान्तरदुर्जयेषु खिन्नः ॥ कवचायि तया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम् ॥ २८ ॥ मयि तिष्ठति दुष्कृतां प्रधाने मितदोषानितरान्विचिन्वती त्वम् ॥ अपराधगणैरपूर्णकुक्षिः कमलाकान्तदये कथं भवित्री ॥ २९ ॥ अहमस्म्यपराधचक्रवर्ती करुणे त्वं च गुणेषु सार्वभौमी ॥ विदुषि स्थितिमीदृशीं स्वयं मा वृषशैलेश्वरपादसात्कुरु त्वम् ॥३०॥ अशिथिलकरणेऽस्मिन्नक्षतश्वासवृत्तौ वपुषि गमनयोगे वासमासादयेयम् ॥ वृषगिरिकटकेषु व्यञ्जयत्सु प्रतीतैर्मधुमथनदये त्वां वारिधाराविशेषैः ॥ ३१ ॥ अविदितनिजयोगक्षेममात्मानभिज्ञं गुणलवरहितं मां गोप्तुकामा दये त्वम् ॥ परवति चतुरैस्ते विभ्रमैः श्रीनिवासे बहुमतिमनपायां

विन्दसि श्रीधरण्योः ॥ ३२ ॥ फलवितरणदक्षं पक्षपातानभिज्ञं प्रगुणमनुनिधेयं प्राप्य पद्मा सहायम् ॥ महति गुणसमाजे मानपूर्वं दये त्वं प्रतिवदसि यदार्हं पाप्मनां मादृशानाम् ॥ ३३ ॥ अनुभवितुमघौघं नालमागामिकालः प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ॥ स्वयमिति हि दये त्वं स्वीकृतश्रीनिवासा शिथिलितभवभीतिः श्रेयसे जायसे नः ॥३४॥ अवतरणविशेषैरात्मलीलापदेशैरवमतिमनुकम्पे मन्दचित्तेषु विन्दन् ॥ वृषभशिखरिनाथस्त्वन्निदेशेन नूनं भजति शरणभाजां भाविनो जन्मभेदान् ॥ ३५ ॥ परहितमनुकम्पे भावयन्त्यां भवत्यां स्थिरमनुपथि हार्दं श्रीनिवासो दधानः॥ ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं प्रथयति बहुमानं तत्प्रतिच्छन्दबुद्ध्या ॥३६॥ वृषगिरिसविधेषु व्याजतो वासभाजां दुरितकलुषितानां दूयमाना दये त्वम् ॥ करणविलयकाले कान्दिशीकस्मृतीनां स्मरयसि बहुलीलं माधवं सावधाना ॥३७॥ दिशि दिशि गतिविद्भिर्देशिकैर्नीयमानाः स्थिरतरमनुकम्पे स्त्यानलग्ना गुणैस्त्वम्॥ परिगतवृषशैलं पारमारोपयन्ती भवजलधिगतानां पोतपात्री भवित्री ॥ ३८ ॥ परिमितफलसङ्गात्प्राणिनः किम्पचाना निगमविपणिमध्ये नित्यमुक्तानुषक्तम्॥प्रसदनमनुकम्पेप्राप्तवत्या भवत्या वृषगिरिहरिनीलं व्यञ्जितं निर्विशन्ति ॥३९॥ त्वयि बहुमतिहीनः श्रीनिवासानु-

कम्पे जगति गतिमिहाम्यां देवि सम्मन्यते यः ॥ स खलु
विबुधसिन्धौ सन्निकर्षे वहन्त्यां शमयति मृगतृष्णावी-
चिकाभिः पिपासाम् ॥४०॥ आज्ञां ख्यातिं धनुमनचरा-
नाधिराज्यादिकं वा काले दृष्ट्वा कमलवसतेरप्यकिञ्चि
त्कराणि ॥ पद्माकान्तं प्रणिहितवतीं पालनेऽनन्यसाध्ये
साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम् ॥४१॥
प्राजापत्यप्रभृतिविभवं प्रेक्ष्यपर्यायदुःखं जन्माकांक्षन्वृष
गिरिवने जग्मुषां तस्थुषां वा ॥ आशासाना कतिचन विभो
त्वत्परिष्वङ्गधन्यैरङ्गीकारं क्षणमपि दये हार्दतुङ्गैरपाङ्गैः
॥ ४२ ॥ नाभीपद्मस्फुरणसुभगानव्यनीलोत्पलाभाक्री-
डाशैलं कमपि करुणे वृण्वती वेंकटाख्यम् ॥ शीता
नित्यं प्रसदनवती श्रद्दधानावगाह्या दिव्या काचिज्जयति
महती दीर्घिका तावकीना ॥४३॥ यस्मिन् दृष्टे तदि-
तरसुखैर्गम्यते गोष्पदत्वं सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्त-
मानन्दसिन्धुम् ॥ त्वत्स्वाकारात्तमिह कृतिनः सूरिवृन्दा
नुभाव्यं नित्यापूर्वं विधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥
॥४४॥ सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः
काले काले घनरसवती कालिकेवानुकम्पे ॥ व्यक्तोन्मेषा-
मृगपतिगिरौ विश्वमाप्याययन्ती शीलोपज्ञं क्षरति भवती
शीतलं सद्गुणौघम् ॥४५॥ भीमे नित्यं भवजलनिधौ
मज्जतां मानवानामालम्बार्थं वृषगिरिपतिस्त्वन्नियोगा-

त्प्रयुक्ते॥प्रज्ञासार प्रकृतिमहता मूलभागेन जुष्टं शाखा-
भेदैः सुभगमनघं शाश्वतं शास्त्रपाणिम् ॥४६॥ विद्व-
त्सेवाकतकनिकषैर्वीतपंकाशयानां पद्माकान्तः प्रणयति
दये दर्पणं ते स्वशास्त्रम् ॥ लीलादक्षां त्वदनवसरे
लालयन् विप्रलिप्सां मायाशास्त्राण्यपि शमयितुं
त्वत्प्रसन्नः प्रतीपान् ॥ ४७ ॥ दैवात्प्राप्ते वृषगिरि-
तटं देहिनि त्वन्निदानात्स्वामिन्पाहीत्यवशवचने विन्द-
तिस्वापमन्त्यम्॥देवःश्रीमान्दिशति करुणे दृष्टिमिच्छं-
स्त्वदीयामुद्घातेनश्रुतिपरिषदामुत्तरेणाभिमुख्यम्४८॥
श्रेयस्सूतिं सकृदपि दये सम्मतां यः सखी ते शीतोदारा
मलभत जनः श्रीनिवासस्य दृष्टिम् ॥ देवादीनामयमनृ-
णतां देहवत्त्वेऽपि विन्दन्बंधान्मुक्तो बलिभिरनघैःपूर्यते-
तत्प्रयुक्तैः॥४९॥ दिव्यापाङ्गं दिशसि करुणे येषु सद्दे-
शिकात्मा क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्त्रबन्ध्वादयस्ते॥
विश्वाचार्या विधिशिवमुखाः स्वाधिकारापरुद्धा मन्ये
माता जड इव सुते वत्सला मादृशे त्वम् ॥ ५० ॥
अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीमशिथिलधर्म-
सेतुपदवीं रुचिरामचिरात्॥ अमितमहोर्मिजालमतिल-
ङ्घ्य भवाम्बुनिधिं भवति वृषाचलेशपदपत्तननित्यधनी
॥५१॥अभिमुखभावसंपदभिसंभविनां क्वचिदुपलक्षिता
क्वचिदभंगुरगूढगतिः ॥ विमलरसावहा वृषगिरीशदये
भवती सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥५२॥

अपि करुणे जनस्य तरुणेन्दुविभूषणतामपि कमला सनत्वमपि धाम वृषाद्रिपते ॥ तरतमतावशेन तनुते ननु ते विततिः परहितवर्षणा परिपचेलिमकेलिमती ॥९३॥ धृतभुवना दये त्रिविधगत्यनुकूलतरा वृषगिरिनाथपादपरिरम्भपती भवती॥अविदितवैभवापि सुरसिन्धुरिवातनुते सकृदवगाहमानमपतापमपापमपि॥९४॥ निगमसमाश्रितानिखिललोकसमृद्धिकरीभजदघकूलमुद्वहगतिः परितप्तहिता॥प्रकटितहंसमत्स्यकमठाद्यवतारशता विबुधसरिच्छ्रियं वृषगिरीशदये वहसि ॥ ९५ ॥ जगति मितम्पचा त्वदिता तु दये तरला फलनियमोज्झिता भवति सन्तपनाय पुनः॥त्वमिह निरंकुशप्रशकनादिविभूतिमती वितरसि देहिनां निरवधि वृषशैलनिधिम्॥९६॥सकरुणलौकिकप्रभुपरिग्रहनिग्रहयोर्निवर्तिमुपाधिचक्रपरिवृत्तिपरम्परया ॥ वृषभमहीधरेशकरुणे वितरंगयतां श्रुतिमितसम्पदि त्वयि कथं भविता विषयः ॥ ९७ ॥ वृषगिरिकृष्णमेघजनितां जनितापहरा वदभिमतिं सुवृष्टिमुपजीव्यनिवृत्ततृषः॥ बहुषु जलाशयेषु बहुमानमपोह्य दये न जहति सत्पथं जगति चातकवत्कृतिनः ॥ ९८ ॥ त्वदुदयतूलिकाभिरमुना वृषशैलजुषा स्थिरतरशिल्पिनेव परिकल्पितचित्रधियः ॥ यतिपतियामुनप्रभृतयः प्रथयति दये जगन्ति हि तन्न

नस्त्वयि भरन्यसनादधिकम् ॥ ५९ ॥ मृदुहृदये दये मृदितकामहिते महिते धृतविबुधे बुधेषु विततात्मधुरे मधुरे ॥ वृषगिरिसार्वभौमदयिते मयि ते महतीं भवुकनिधे निधेहि भवमूलहरीं लहरीम् ॥६०॥ अकूपारैरेकोदकसमयवैतण्डिकजवैरनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्यवडवाम् ॥ कृपे त्वं तत्तादृक्प्राथिमवृषपृथ्वीधरपतिस्वरूपद्वैगुण्यद्विगुणनिजबिन्दुः प्रभवसि ॥ ६१ ॥ विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये पटुप्रत्याहारप्रभृतिपुटपाकप्रचकिताः॥नमन्तस्त्वां नारायणशिखरिकूटस्थकरुणे निरुद्धत्वद्द्रोहान्नृपतिसुतनीतिं न जहति॥ ॥६२॥अनन्याधीनः सन् भवति परतन्त्रः प्रणमतां कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम् ॥ पतिस्तत्पारार्थ्यं प्रथयति वृषक्ष्माधरपतिर्व्यवस्थां वैयात्यादिति विघटयन्ती विहरसि ॥६३॥ अपां पत्युः शत्रूनसहनमुनेर्धर्मीनिगडं कृपे काकस्यैकं हितमिति हिनस्ति स्म नयनम् ॥ विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्धिहतिभिर्दिशत्येवं देवो जनितसुगतिं दण्डनगतिम् ॥६४॥ निषादानां नेता कपिकुलपतिः कापि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ॥ अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे शमयसि ॥ ६५ ॥ त्वया दृष्टः स्तुष्टिं भजति परमेष्ठी निजपदे वहन्मूर्तीरष्टौ विहरति मृडानीपरिवृढः॥बिभर्ति

स्वाराज्यं वृषशिखरि शृङ्गारि करुणे सुनासीरो देवासुरस
मरनासीरसुभटः ॥६६॥ दये दुग्धोदन्वद्व्यतियुतसुधा
सिन्धुनयत स्त्वदाश्लेषान्नित्यं जनितमृतसंजीवनदशाः॥
स्वदन्ते दान्तेभ्यः श्रुतिवदनकर्पूरगुलिका विवृण्वन्तश्चित्तं
वृषशिखरिविश्वम्भरगुणाः ॥६७॥ जगज्जन्मस्थेमप्रल-
यरचनाकेलिरसिको विमुक्त्यैकद्वारं विघटितकपाटं
प्रणयिनम् ॥ इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे
विशुद्धानां वाचां वृषशिखरिनाथः स्तुतिपदम् ॥६८॥
कलिक्षोभोन्मीलत्क्षितिकलुषकूलंकषजवैर नुच्छेदैरेतैरव
टतटवैषम्यरहितैः॥प्रवाहैस्ते पद्मासहजचरपरिष्कारिणि
कृपे विकल्पान्तेऽनल्पावृषशिखरिणो निर्झरगुणा ॥६९॥
खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनं कृपे सिंह-
क्ष्माभृत्कृतमुखचमत्कारकरणम्॥ भरंन्यासच्छन्नप्रबल-
वृजिनप्राभसमतांप्रतिप्रस्थानंते श्रुतिनगर शृङ्गाटकजुषः
॥ ७० ॥ त्रिविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका
वृषगिरिविभोरिच्छासा त्वं परैरपराहता ॥ कृपणपरि-
भूत्किकुर्वाणप्रभूतगुणान्तरा वहसिकरुणे वैचक्षण्यंमदी-
क्षणसाहसे ॥७१॥ वृषगिरिपतेर्हृद्या विश्वावतारसहा-
यिनीक्षपितनिखिलावद्या देवि क्षमादिनिषेविता॥ भुव-
नजननी पुंसां भोगापवर्गविधायिनी वितमसि पदव्यक्तिं
नित्यां बिभर्षि दये स्वयम् ॥ ७२ ॥ स्वयमुदयिनः

सिद्धाद्याविष्कृताश्चशुभालयाविविधविभवव्यूहावासाः
परं च पदं विभोः ॥ वृषगिरिसुखेष्वेतेष्विच्छावविप्रति-
लब्धये दृढविनिहता निःश्रेणिस्त्वं दये निजपर्वभिः ॥७३॥
हितमतिजगद्दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरैरमतिविहितै-
रन्यैर्धर्मायितैश्च यदृच्छया ॥ परिणतबहुच्छद्मापद्मा-
सहायदये स्वयं प्रदिशसि निजाभिप्रेतं नः प्रशाम्यद-
पत्रपा ॥ ७४ ॥ अतिविधिशिवैरैश्वर्यात्माऽभूतिरसै-
र्जनानहृदयमिहोपच्छद्यैषामसङ्गदशार्थिनी ॥ तृषितज-
नतातीर्थस्नानक्रमक्षपितैनसां वितरसि दये वीतातङ्कावृ-
षाद्रिपतेः पदम् ॥७५॥ वृषगिरिसुधासिन्धौ जन्तुर्दये
निहितस्त्वया भवभयपरीतापाच्छित्यै भजन्नघमर्षणम् ॥
मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते स्वयमुपनतैः स्वा-
त्मानन्दप्रभृत्यनुबन्धिभिः ॥७६॥ अनितरजुषामन्तर्मू-
लेऽप्यपायपरिप्लवे कृतविदनघाविच्छिद्यैषां कृपेयमप-
श्यताम् ॥ प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितं प्रतिविधि-
मुपादित्सेसार्थं वृषाद्रिहितैषिणा ॥ ७७ ॥ क्षणविल-
यिनां शास्त्रार्थानां फलाय निवेशिते पितृसुरगणे निर्वे-
शात्प्रागपि प्रलयं गते ॥ अधिगतवृषक्ष्मा भृन्नाथामकालः
वशंवदां प्रतिभुवमिव व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥
॥७८॥ त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा वितरति
निजं पादाम्भोजं वृषाचलशेखरः तदिह करुणे तत्तत्क्री
डातरङ्गपरम्परातरतमतया जुष्टायास्ते दुरत्ययतां विदुः

॥ ७९ ॥ प्रणिहितधियां त्वत्संपृक्तौ वृषाद्रिशिखामणौ प्रसृमरसुधाधाराकारा प्रसीदति भावना ॥ दृढमिति दये दत्तास्वादं विमुक्तिबलाहकं निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥ ८० ॥ कृपे विगत वेलयाकृतसमग्र-पोषैस्त्वया कलिज्वलनदुर्गते जगति कालमेघायितम् ॥ वृषाक्षितिधरादिषुस्थितिपदेषुसानुप्लवैर्वृषाद्रिपतिविग्रहै र्व्यपगताखिलावग्रहैः ॥ ८१ ॥ प्रभूय विविधं जगत्तदभि-वृद्धये त्वं दये समीक्षणविचिन्तनप्रभृतिभिः स्वयं तादृशैः ॥ विचित्रगुणचित्रिता विविधदोषवैदेशिकीं वृषा चलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥ ८२ ॥ युगान्तसमयोचितं भजति योगनिद्रारसं वृषक्षिभृदी-श्वरे विहरणक्रमाज्जाग्रति ॥ उदीर्णचतुरर्णवीकदनवेदिनीं मेदिनीं समुद्धृतवती दये त्वदभिजुष्टया दंष्ट्रया ॥ ८३ ॥ सटापटलभीषणे सरभसाट्टहासोद्भटे स्फुरत्क्रुधिपरिस्फु-रद्भ्रुकुटिकेऽपि वक्रे कृते ॥ दयेवृषगिरिशितुर्दनुजडिम्भ-दत्तस्तनासरोजसदृशा दृशासमुदिताकृतिर्दृश्यते ॥ ८४ ॥ प्रसक्तमधुना विधिप्रणिहितैस्सपर्योदकैः समस्तदुरित-च्छिदा निगमगन्धिना त्वं दये ॥ अशेषमविशेषतस्त्रि-जगदञ्जनाद्रीशितुश्चराचरमचीकरच्चरणपङ्कजेननांकितम् ॥ ८५ ॥ परश्वधतपोधनप्रथनसत्क्रुतूपाकृतक्षितीश्वरप-

शुक्षरत्क्षतजकुंकुमस्थासकैः ॥ वृषाचलदयालुना ननु-
विहर्तुमालिप्यधो निधाय हृदये दये निहितरक्षितानां
हितम् ॥ ८६ ॥ कृपे कृतजगद्धिते कृपणजन्तुचिन्ता-
मणे रमासहचरक्षितौ रघुधुरीणयन्त्या त्वया ॥ व्यभ-
ज्यत सरित्पतिः सकृदवेक्षणात्तत्क्षणात्प्रकृष्टबहुपा-
तकप्रशमहेतुना सेतुना ॥ ८७ ॥ कृपे परवतस्त्वया
वृषगिरीशितुः क्रीडितं जगद्धितमशेषतस्तदिदमित्थ-
मर्थाप्यते॥मदच्चलपरिच्युतप्रणतदुष्कृतप्रेक्षितैर्हतप्रब-
लदानवैर्हलधरस्य हेलाशतैः ॥ ८८ ॥ प्रभूतविबुधद्वि-
षद्भरणखिन्नविश्वम्भराभरापनयनच्छलात्त्वमवतार्य ल-
क्ष्मीधरम् ॥ निराकृतवती दये निगमसौधदीप्तश्रिया
विपश्चिदविगीतया जगति गीतयान्धं तमः ॥ ८९ ॥
वृषाद्रिहयसादिनःप्रबलदोर्मरुत्प्रेंखितास्त्विषास्फुटताडि
द्गुणस्त्वपवसेकसंस्कारवान्॥करिष्यतिदयेकलिप्रबल-
धर्मनिर्मूलनं पुनः कृतयुगांकुरं भुवि कृपाणधाराधरः
॥ ९० ॥ विश्वोपकारमिति नाम सदा दुहानामद्यापि
देवि भवतीभवधीरयन्तम् ॥ नाथे निवेशय वृषाद्रिपतौ
दये त्वं न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥ ९१ ॥
नैसर्गिकेण तरसा करुणे नियुक्ता निघ्नतरेऽपि मयि ते
विततिर्यदि स्यात् ॥ विस्मापयेद्वृषगिरीश्वरमप्यपार्या
वेलातिलंघनदशेव महाम्बुराशेः ॥९२॥ विज्ञातशास-

नगतिर्विपरीतवृत्त्या वक्त्रादिभिः परिचितां पदवीं भजामि ॥ एवं विधे वृषगिरीशदये मयि त्वं दीने विभोः शमय दण्डधरत्वलीलाम् ॥९३॥ मा साहसोक्तिघनकञ्चुकवञ्चितान्यः पश्यत्सु तेषु विदधाम्यतिसाहसानि॥ पद्मासहायकरुणेन रुणत्सि किं त्वं घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥ ९४ ॥ विक्षेपमर्हसि दये विपुलायितेऽपि व्याजं विभाव्य वृषशैलपतेर्विहारम् ॥ स्वाधीनसत्त्वसरणिः स्वयमत्र जन्तौ द्राघीयसी दृढतरा गुणवागुरा त्वम् ॥ ९५ ॥ सन्तन्यमानमपराधगणं विचिन्त्य त्रस्यामि हन्त भवतीं च विभावयामि ॥ अह्नाय मे वृषगिरीशदये जहीमामाशीविषग्रहणकेलिनिभामवस्थाम्॥ ॥९६॥ औत्सुक्यपूर्वमुपहृत्य महापराधान्मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ॥ आलिह्यतां निरवशेषमलब्धतृप्तिस्ताम्यस्यहो वृषगिरीशधृता दये त्वम् ॥९७॥ जह्याद्वृषाचलपतिः प्रतिघेऽपि न त्वां घर्मोपतप्त इव शीतलतामुदन्वान् ॥ सा मामरुंतुदभरन्यसनानुवृत्तिस्त्वद्वीक्षणैः स्पृश दये तव केलिपद्मैः ॥९८॥ दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं स्नात्वापि धूलिरसिकं भजनेऽपि भीमम् ॥ बद्ध्वा गृहाण वृषशैलपतेर्दये मां त्वद्वारणं स्वयमनुग्रहशृंखलाभिः ॥ ९९ ॥ नातः परं किमपि मे त्वयि नाथनीयं मातर्दये मयि कुरुष्व तथा प्रसादम् ॥ बद्धादरो वृषगिरिप्रणयी यथासौ मुक्तानुभू-

तिमिह दास्यति मे मुकुंदः ॥१००॥ निस्सीमवैभवजु-
षामिषतां गुणानां स्तोतुर्दये वृषगिरीशगुणेश्वरीं त्वाम्॥
तैरेव नूनमवशैरभिनन्दितं मे सत्यापि तं तव बलादकु-
तोभयत्वम् ॥१०१॥ अद्यापि तद्वृषगिरीशदये भव-
त्यामारम्भमात्रमनिदं प्रथमस्तुतानाम्॥ संदर्शितस्वम-
रनिर्वहणासहेथा मन्दस्य साहसमिदं त्वयि नन्दिनोमे-
॥१०२॥ प्रायो दये त्वदनुभावमहाम्बुराशौ प्राचेतसप्र-
भृतयोऽपि परन्तटस्थाः॥ तत्रावतीर्णमतलस्पृशमाप्लुतं
मां पद्मापते प्रहसनोचितमाद्रियेथाः ॥१०३॥ वेदान्त-
देशिकपदे विनिवेश्य बालं देवो दशाशतकमेतदवादय-
न्माम् ॥ वैहारिकेण विधिना समये गृहीतं वीणाविशेष-
मिव वेंकटशैलनाथः ॥ १०४ ॥ अनवधिमधिकृत्य
श्रीनिवासानुकम्पामवितथविषयत्वाद्विश्वमव्रीडयन्ति॥
विविधकुशलनीवी वेंकटेशप्रसूता स्तुतिरियमनवद्या
शोभते सत्त्वभाजाम् १०५॥शतकमिदमुदारं सम्यगभ्य-
स्यमानान्वृषगिरिमधिरुह्य व्यक्तमालोकयन्तीम्॥ अनि-
तरशरनानामाधिराज्येऽभिषिञ्चेच्छमितविमतपक्षा शा-
र्ङ्गधन्वानुकम्पा॥१०६॥विश्वानुग्रहमातरंव्यतिषजत्स्व
र्गापवर्गासुधासधीचीमिव वेंकटेश्वरकविर्भक्त्यादयाम-
स्तुता ॥ पद्मानामिह यद्विधेयभगवत्संकल्पकल्पद्रुमाझ-
ञ्झामारुतधूतचूतनयतःसांपातिकोऽयंक्रमः ॥१०७॥
कामं सन्तुमिथः करम्बितगुणावद्यानि पद्यानि नःकस्या-

स्मिन् शतके पदम्बुकतके दोषः श्रुतिंक्षाम्यति ॥ निष्प्रत्यूहवृषाद्रिझर्झरझरत्कारच्छलेनोज्ज्वलद्दीनालम्बनदिव्यदंपतिदयाकल्लोलकोलाहलः ॥१०८॥ इति कवितार्किकसिंहस्य सर्वतन्त्रस्वन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषुदयाशतकं सम्पूर्णम् ॥४२॥ श्रीरस्तु ॥

## अथ चतुःश्लोकिभागवतप्रारम्भः

श्रीमते रामानुजाय नमः ॥ श्रीभगवानुवाच ॥ ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ॥ सरहस्यं तदङ्गं च गृहाण गदितं मया ॥ १ ॥ यावानहं यथा भावो यद्रूपगुणकर्मकः ॥ तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥२॥ अहमेवासमेवाग्रे नान्यद्यत्सदत्परम् ॥ पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥३॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ॥ तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥ ४ ॥ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ॥ प्रविष्टान्यप्रविष्टानि यथा तेषु न तेष्वहम् ॥ ५ ॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मना ॥ अन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा ॥ ६ ॥एतन्मतं समातिष्ठ परमेण समाधिना ॥भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ७ ॥ इति श्रीभागवतेमहापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कन्धेभगवद्ब्रह्मसंवादे चतुःश्लोकिभागवतं समाप्तम् ॥ ४३ ॥

# अथ अभीतिस्तवप्रारम्भः

श्रीमते रामानुजाय नमः ॥ श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ॥ वेदान्ताचार्यवर्यो मे सन्निधत्तांसदा हृदि ॥१॥ अभीतिरिह यज्जुषां यदवधीरितानां भयं भयाभयविधायिनो जगति यन्निदेशे स्थिताः॥तदेतद-तिलङ्घितद्रुहिणशंभुशक्रादिकं रमासखमधीमहे किमपि रङ्गधुर्यं महः ॥२॥ दया शिशिरिताशया मनसि मे सदा जागृयुः श्रियाध्युषितवक्षसः श्रितमरुद्धधासैकता॥ जगद्दुरितघस्मरा जलधिडिम्भडम्भस्पृशः सकृत्प्रणत-रक्षणप्रथितसंविदः संविदः॥३॥यदव्यमितबुद्धिना बहु-लमोहभाजा मया गुणग्रथितकायवाङ्मनसि वृत्तिवै-चित्र्यतः॥ अतर्कितहिताहितक्रमविशेषमारभ्यतेतदप्यु-चितमर्चनं परिगृहाण रङ्गेश्वर ॥४॥ मरुत्तरणिपावक-त्रिदशनाथकालादयः स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः ॥ महत्किमपि वज्रमुद्यतमिवेति यच्छ्रूयते तरत्यनघयद्भयं य इह तवस्तावकः ॥५॥ भवन्तमिह यः सुधीर्नियतचेतनाचेतनं पनायति नमस्यति स्मरति वक्ति पर्येति वा॥गुणंकमपिवेत्ति वा तव गुणेशगोपायितुः कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम् ॥ ६ ॥ स्थिते मनसि विग्रहे गुणिनिधातुसाम्ये सति स्मरेदखि-लदेहिनं य इह जातुचित्त्वामजम् ॥ तयैव खलु संधय

तमथ दीर्घनिद्रावश स्वयं विहितसंस्मृतिर्नयसि धाम नैश्श्रेयसम् ॥७॥ रमादयित रङ्गभूरमण कृष्ण विष्णो हरे त्रिविक्रम जनार्दन त्रियुगनाथ नारायण ॥ इतीव शुभदानि यः पठति नामधेयानि ते न तस्य यमवश्यता नरकपातभीतिः कुतः ॥ ८ ॥ कदाचिदपि रङ्गभूरसिक यत्र देशे वशी त्वदेकनियताशयस्त्रिदशवन्दितो वर्तते ॥ तदक्षततपोवनं तव च राजधानी स्थिरा सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत् ॥ ९ ॥ त्रिवर्गपथवर्तिनां त्रिगुणलङ्घनोद्योगिनां द्विषत्प्रमथनार्थिनामपि च रङ्गदृश्योदयाः॥स्खलत्समयकातरीहरणजागरूकाः प्रभो करग्रहणदीक्षिताः क इह ते न दिव्या गुणाः ॥१०॥ बिभेति भवभृत् प्रभो त्वदुपदेशतीव्रौषधात् कदध्वरसदुर्विषे बडिशभक्षवत् प्रीयते ॥ अपथ्यपरिहारधीविमुखमित्थमाकस्मिकी तमप्यवसरे क्रमदवति वत्सला त्वद्दया ॥११॥ अपार्थ इति निश्चितप्रहरणादियोगस्तव स्वयं वहसि निर्भयस्तदपि रङ्गपृथ्वीपते ॥ स्वरक्षणमिवाभवत्प्रणतरक्षणं तावकं यदात्थ परमार्थविन्नियतमन्तरात्मेति ते ॥१२॥ लघिष्ठसुखसंगतैःस्वकृतकर्मनिर्वर्तितैः कलत्रसुतसोदरानुचरबन्धुसंबन्धिभिः ॥ धनप्रभृतिकैरपि प्रचुरभीतिभेदोत्तरैर्नविप्रतिधृतिं विभो त्वदनुभूतिभोगार्थिनः ॥ १३ ॥ न वक्तुमपि शक्यते नरकगर्भवासादिकं वपुश्च बहुधा-

तुकं निपुणचिन्तने तादृशम् ॥ त्रिविष्टपमुखं तथा
तव पापस्य देदीप्यतः किमत्र न भयास्पदं भवति
रङ्ग पृथ्वीपते ॥ १४ ॥ भवन्ति सुखभेदतो भयनिदा-
नमेव प्रभो शुभाशुभविकल्पिता जगति देशकालादयः
इति प्रथितसाध्वसे मयि दयिष्यसे त्वं न चेत्
कमित्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ॥ १५ ॥
सकृत्प्रपदनस्पृशामभयदाननित्यव्रतीनच द्विरभिभाषसे
त्वमिति विश्रुतस्वोक्तितः ॥ यथोक्तकरणं विदुस्तव तु
यातुधानादयः कथं वितथमस्तु तत् कृपणसार्वभौमे
मयि ॥ १६ ॥ अनुक्षणसमुत्थिते दुरितवारिधौ दुस्तरे
यदि क्वचन निष्कृतिर्भवती सापि दोषाविला॥तदित्थ-
मगतो मयि प्रतिविधानमाधीयतां स्वबुद्धिपरिकल्पितं
किमपि रङ्गधुर्य त्वया ॥१७॥ विषाद बहुलादहं विष-
यवर्गतो दुर्जयाद्बिभेमि वृजिनोत्तरस्त्वदनुभूतिविच्छे-
दतः ॥ मया नियतनाथवानयमिति त्वमर्थापयन् दया-
घन जगत्पते दयितरङ्ग संरक्ष माम् ॥१८॥ निसर्गनि-
रनिष्ठता निरंभसः श्रूयते ततस्त्रियुगसृष्टिवद्भवति
संहृतिः क्रीडितम् ॥ तथापि शरणं गतप्रणयभङ्गभीतो
भवान् मदिष्टमिह यद्भवेत्किमपि मास्म तज्जह्यपः
॥ १९ ॥ कयाधुसुतवायसद्विरदपुङ्गवद्रौपदीविभीषण-
भुजङ्गमव्रजगणाम्बरीषादयः ॥ भवत्पदसमाश्रिता भय-

विमुक्तिमापुर्यथा लभेमहि तथा वयं सपदि रङ्गधुर्य
त्वया ॥ २० ॥ भयं शमय रङ्गधाम्न्यनितराभिलाष-
स्पृशां श्रियं बहुलय प्रभो श्रितविपक्षमुन्मूलय॥स्वयं
समुदितं वपुस्तव निशामयन्तस्सदा वयं त्रिदशनिर्वृतिं
भुवि मुकुन्द विन्देमहि ॥ २१ ॥श्रियः परिवृढे त्वयि
श्रितजनस्य संरक्षके सदद्भुतगुणोदधाविति समर्पितोऽयं
भरः ॥ प्रतिक्षणयतः परं प्रथय रङ्गधामादिषु प्रभुत्व-
मनुपाधिकं प्रथितहेतिभिर्हेतिभिः ॥ २२ ॥ कलिप्रणि-
धिलक्षणैः कलितशाक्यलोकायतैस्तुरुष्कयवनादिभिर्ज
गति जृम्भमाणं भयम् ॥ प्रकृष्टनिजशक्तिभिः प्रसभ-
मायुधैः पञ्चभिः क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ
क्षणात् ॥ २३ ॥ दितिप्रभावदेहभिद्दहनसोमसूर्यात्मकं
तमःप्रमथनं प्रभो समुदितास्त्रवृन्दं स्वतः॥स्ववृत्तिवश-
वर्तितस्त्रिदशवृत्तिचक्रं पुनः प्रवर्त्तयतु धाम्नि ते महति
धर्मचक्रस्थितिम् ॥ २४ ॥ मनुप्रभृतिमानिते महति
रङ्गधामादिके दनुप्रभवदारुणैर्दरमुदीर्यमाणं परैः॥प्रकृ-
ष्टगुणकः श्रिया वसुधया च सन्धुक्षितः प्रयुक्तकरुणोदधे
प्रशमयस्व शक्त्या स्वयम् ॥ २५ ॥भुजङ्गमविहङ्गमप्र
वरसैन्यनाथाः प्रभो तथैवकुमुदादयो नगरगोपुरद्वारपाः
अचिन्त्यबलविक्रमस्त्वमिव रङ्गसंरक्षका जितंत इति
वादिनो जगदनुग्रहे जाग्रति ॥ २६ ॥ विधिस्त्रिपुरमर्द-

स्त्रिदशपुङ्गवः पावको यमप्रभृतयोऽपि यद्बिमतरक्षणे न क्षमाः ॥ रिरक्षिपति यत्र च प्रतिभयं नकिञ्चित् क्वचित् स नः प्रतिभटान् प्रभो शमय रङ्गधामादिके ॥२७॥ सकैटभतमोरविर्मधुपरागझञ्झामरुद्धिरण्यगिरिदारणस्त्रुटित कालनेमिद्रुमः॥ किमत्र बहुना भजद्भवपयोधिसुष्टिंधयस्त्रिविक्रमभवत्क्रमः क्षिपतु मंक्षु रङ्गद्विषः ॥ २८ ॥ यतिप्रवरभारतीरसभरेण नीतं वयः प्रफुल्लपलितं शिरः पदमिह क्षमं प्रार्थये॥ निरस्तरिपुसंभवे क्वचनरङ्गमुख्ये विभो परस्परहितैषिणां परिसरेषु मां वर्तय ॥२९॥ प्रबुद्धगुरुवीक्षणप्रथितवेंकटेशोद्भवामिमामभय सिद्धये पटति रंगभर्तुः स्तुतिम् ॥ भयं त्यजत भद्रमित्यभिदधत्स वः केशवः स्वयं घनघृणानिधिर्गुणगणेन गोपायति ॥३०॥ इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु अभीतिस्तवः समाप्तः ॥ ४४ ॥

# अथ अष्टादशश्लोकी गीता

श्रीगणेशायः नमः अर्जुन उवाच ॥ निमित्तानि च पश्यामि विपरीतानि केशव॥नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ १ ॥ श्रीभगवानुवाच ॥ योगस्थःकुरु कर्माणि संगं त्यक्त्वा धनञ्जय॥ सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥२॥ कर्मेन्द्रियाणि संयम्य य

आस्ते मनसा स्मरन् ॥ इन्द्रियार्थान्विमूढात्मा मिथ्या-
चार स उच्यते ॥३॥ श्रद्धावाँल्लभते ज्ञानं तत्परः संय-
तेन्द्रियः ॥ ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छ-
ति ॥४॥ जितेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः॥विग-
तेच्छाभयक्रोधोः सदा मुक्त एव सः ॥ ५ ॥ युक्ताहा-
रविहारस्य युक्तचेष्टस्य कर्मसु ॥ युक्तस्वप्नावबोधस्य
योगो भवति दुःखहा ॥६॥ दैवी ह्येषा गुणमयी मम
माया दुरत्यया ॥ मामेव ये प्रपद्यन्ते मायामेतां तरंति
ते॥७॥ अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥
तत्र प्रयातागच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥८॥अपिचेत्
सदुराचारो भजतेमामनन्यभाक् ॥ साधुरेव स मन्तव्यः
सम्यग्व्यवसितो हि सः॥९॥ यो मामजनादिं च वेत्ति
लोकमहेश्वरम् ॥ असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते
॥१०॥ मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ॥ निर्वैरः
सर्वभूतेषु यः स मामेति पाण्डव॥११॥ श्रेयो हि ज्ञान-
मभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥ ध्यानात् कर्मफल-
त्यागस्त्यागाच्छान्तिरनन्तरम्॥१२॥ क्षेत्रज्ञं चापि मां
विद्धि सर्वक्षेत्रेषु भारत ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं
मतं मम ॥१३॥ मां च योऽव्यभिचारेण भक्तियोगेन
सेवते॥ स गुणान् समतीत्यैव ब्रह्मभूयाय कल्पते॥१४॥
निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तका

मा: ॥ द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदम-
व्ययं तत् ॥१५॥ यः शास्त्रविधिमुत्सृज्य वर्तते काम-
कारतः ॥ न स सिद्धिमवाप्नोति न सुखं न परां गतिम्
॥ १६ ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥
भावसंशुद्धिरित्येतं तपो मानसमुच्यते ॥१७॥ सर्वध-
र्मान् परित्यज्य मामेकं शरणं व्रज ॥ अहं त्वा सर्वपापे-
भ्यो मोक्षयिष्यामि मा शुचः ॥१८॥ गीतासारमिदं
पुण्यं यः पठेत्सुसमाहितः॥ विष्णुलोकमवाप्नोति भय-
शोकविनाशनम् ॥ १९ ॥ इति श्रीवेदव्यासविरचिता
अष्टादशश्लोकी गीता सम्पूर्णा ॥ ४५ ॥

## अथ कल्किस्तोत्रप्रारम्भः

श्रीगणेशाय नमः ॥ सुशान्तोवाच ॥ जय हरेऽमरा-
धीश सेवितं तव पदाम्बुजं भूरिभूषणम् ॥ कुरुममाग्रतः
साधुसत्कृतं त्यज महामते मोहमात्मनः ॥ १ ॥ तव
वपुर्जगद्रूपसंपदा विरचितं सतां मानसे स्थितम् ॥ रति
पतेर्मनोमोहदायकं कुरु विचेष्टितं कामलम्पटम् ॥२॥
तव यशो जगच्छोकनाशनं मृदुकथामृतप्रीतिदायकम् ॥
स्मितसुधोक्षितं चन्द्रवन्मुखं तव करोत्वलं लोकमङ्ग-
लम् ॥३॥ मम पतिस्त्वयं सर्वदुर्जयो यदि तवाप्रियं
कर्मणाऽऽचरेत् ॥ जहि तदात्मनः शत्रुमुद्यतं कुरुकृपां
न चेदीदृगीश्वरः ॥ ४ ॥ महदहंयुतं पञ्चमात्रया प्रकृति

जायया निर्मितं वपुः॥तव निरीक्षणाल्लोलया जगत्स्थितिलयोदयं ब्रह्मकल्पितम् ॥५॥ भूवियन्मरुद्वारितेजसां राशिभिः शरीरेन्द्रियाश्रितैः ॥ त्रिगुणया स्वया मायया विभो कुरु कृपां भवत्वसेवनार्थिनाम्॥६॥तव गुणालयं नाम पावनं कलिमलापहं कीर्तयन्ति ये ॥ भवभयक्षयं तापतापितामुहुरहो जनाः संसरन्ति नो ॥ ७ ॥ तव जनुः सतां मानववर्धनं जिनकुलक्षयं देवपालकम् ॥ कृतयुगार्पकं धर्मपूरकं कलिकुलान्तकं शं तनोतु मे ॥ ८ ॥ मम गृहं पतिपुत्रनप्तृकं गजरथैः ध्वजैश्चामरैर्धनैः ॥ मणिवरासनं सत्कृतिं विना तव पदाब्जयोः शोभयन्ति किम् ॥९॥ तव जगद्वपुः सुन्दरस्मितं मुखमनिन्दितं सुन्दरारवम् ॥ यदि न मे प्रियं वल्गुचेष्टितं परिकरोत्यहो मृत्युरस्त्विति ॥ १० ॥ हयचर भयहर करहरशरणखरतखरशरदशवलमदन॥ जय हतपर भर भववरनशनशशधरशतसमरसभरवदन ॥ ११ ॥ इति श्रीकल्किपुराणे सुशान्ताकृतं कल्किस्तोत्रं सम्पूर्णम् ॥ ४६ ॥

## अथ कल्किस्तवप्रारम्भः

श्रीगणेशायनमः ॥ राजान ऊचुः॥गद्यानि॥जयजय निजमाययाकल्पिताशेषविशेषकल्पनापरिणामजलाप्लुतलोकत्रयोपकरणमाकलय्य मनुमनिशम्यपूरितमविजनाविर्भूतमहामीनशरीरत्वं निजकृतधर्मसेतुसंरक्ष-

णकृतावतारः ॥१॥ पुनरिह दितिजबलपरिलंघितवासवसूनादृतजितभुवनपराक्रमहिरण्याक्षनिधनपृथिव्युद्धरणसंकल्पाभिनिवेशेन धृतकोलावतार पाहि नः ॥ २ ॥ पुनरिह जलधिमथनादृतदेवदानवगणमन्दराचलानयनव्याकुलितानां साहाय्येनादृतचित्तः पर्वतोद्धरणामृतप्राशनरचनावतारः कूर्माकारः प्रसीद परेश त्वं दीननृपाणाम् ॥३॥ पुनरिह त्रिभुवनजिनो महाबलपराक्रमस्य हिरण्यकशिपोरर्दितानां देववराणां भयभीतानां कल्याणाय दितिसुतवधप्रेप्सुर्ब्रह्मणो वरदानादवध्यस्यनशस्त्रास्त्रात्रिदिवास्वर्गमर्त्यपातालतलेदेवगंधर्वकिन्नर नागैरिति विचिंत्य नरहरिरूपेण नखाग्रभिन्नारुन्दष्टदन्तच्छदं त्यक्तासुं कृतवानसि ॥४॥ पुनरिह त्रिजगज्जयिनो बलेः सत्रे शक्रानुजो बटुवामनो दैत्यसंमोहनाय त्रिपदभूमियाञ्चाछलेन विश्वकायस्तदुत्सृष्टजलसंस्पर्शविवृद्धमनोऽभिलाषस्त्वं भूतले बलेर्दौवारिकत्वमङ्गीकृतमुचितं दासालम् ॥५॥ पुनरिह हैहयादिनृपाणाम् अमितबलपराक्रमाणां नानामदोल्लङ्घितमर्यादावर्त्मनां निधनाय भृगुवंशजो जामदग्न्यः पितृहोमधेनुहरणप्रवृद्धमन्युवशात् त्रिःसप्तकृत्वो निःक्षत्रियां पृथिवीं कृतवानसि परशुरामावतारः ॥ ६ ॥ पुनरिहपुलस्त्यवंशावतंसस्यविश्रवसः पुत्रस्य निशाचरस्य रावणस्य लोकत्रयतापनस्य निधन-

सुररीकृत्य रविकुलजातदशरथात्मजो विश्वामित्रादस्त्रा-
ण्युपलभ्य वने सीताहरणवशात् प्रवृद्धमन्युना अम्बुधिं
वानरैर्निबद्ध्य सगणं दशकंधरं हतवानसि रामावतारः
॥ ७ ॥ पुनरिह यदुकुलजलधिकलानिधिः—सकलसुर-
गणसेवितपादारविंदद्वन्द्वः विविधदानवदैत्यदलनलोक-
त्रयदुरिततापनो वसुदेवात्मजो रामावतारो बलभद्रस्त्व-
मसि ॥ ८ ॥ पुनरिह विविकृतवेदधर्मानुष्ठानविहितना-
दादर्शनसंघृणः संसारकर्मत्यागविधिना ब्रह्माभासविला-
सचातुरीप्रकृतिविमाननामसम्पादयन् बुद्धावतारस्त्वम-
सि ॥ ९ ॥ अधुना कलिकुलनाशावतारो बौद्धपाख-
ण्डम्लेच्छादीनां च वेदधर्मसेतुपरिपालनाय कृतावतारः
कल्किरूपेणास्मान् स्त्रीत्वनिरयादुद्धृतवानसि तवानु-
कम्पां किमिह कथयामः ॥१०॥ क्व ते ब्रह्मादीनाम-
दितविलासावतरणं क्व नः कामावामाकुलिमृगतृष्णा-
र्तमनसाम् ॥ सुदुष्प्रायं युष्मच्चरणजलजालोकनमिदं
कृपापारावारः प्रमुदितदृशाऽऽश्वासय निजान् ॥११॥
इतिश्रीकल्किपुराणेऽनुभागवते भविष्ये द्वितीयांशे नृप-
कृतकल्किस्तवः संपूर्णः ॥ ४७ ॥

## अथ विष्णुस्तवराजप्रारम्भः

श्रीगणेशाय नमः ॥ पद्मोवाच ॥ योगेन सिद्धविबुधे
परिभाव्यमानं लक्ष्म्यालयं तुलसिकाचित भक्तभृङ्गम्॥

प्रोत्तुङ्गरक्तनखरांगुलिपत्रचित्रं गङ्गारसं हरिपदाम्बुज-
माश्रयेऽहम् ॥ १ ॥ गुम्फन्मणिप्रचयघट्टितराजहंससि-
ञ्जत्सुनूपुरयुतं पदपद्मवृन्दम् ॥ पीताम्बराञ्चलविलोलव-
लत्पताकं स्वर्णत्रिवक्रवलयं च हरेः स्मरामि ॥ २ ॥
जंघे सुपर्णगलनीलमणिप्रवृद्धे शोभास्पदारुणमणिद्यु-
तिचञ्चुमध्ये ॥ आरक्तपादतललम्बनशोभमाने लोके-
क्षणोत्सवकरे च हरेः स्मरामि॥३॥ ते जानुनी मखपते-
र्भुजमूलसङ्गरंगोत्सहावृततडिद्वसने विचित्रे ॥ चञ्चत्प-
तत्रमुखनिर्गतसामगीतविस्तारितात्मयशसीं च हरेः
स्मरामि ॥४॥ विष्णोः कटिं विधिकृतान्तमनोजभूमि-
जीवाण्डकोषगणसंगदुकूलमध्याम् ॥नानागुणप्रकृतिपी-
तविचित्रवस्त्रां ध्यायेन्निबद्धवसनां खगपृष्ठसंस्थाम् ॥५॥
शातोदरं भगवतस्त्रिवलिप्रकाशं चावर्तनाभिविकसद्वि-
धिजन्मपद्मम् ॥ नाडीनदीगणरसोत्थसितान्त्रसिन्धुं
ध्यायेऽण्डकोषनिलयं तनुलोमरेखम् ॥६॥ वृक्षःपयोधि-
तनयाकुचकुंकुमेन हारेण कौस्तुभमणिप्रभया विभातम्॥
श्रीवत्सलक्ष्महरिचन्दनजप्रसूनमालोचितं भगवतःसुभगं
स्मरामि ॥ ७ ॥ बाहू सुवेषसदनौ बलयांगदादिशो-
भास्पदौ दुरितदैत्यविनाशदक्षौ॥ तौ दक्षिणौ भगवतश्च
गदासुनाभतेजोर्जितौ सुललितौ मनसास्मरामि ॥८॥
वामौ भुजौ मुररिपोर्धृतपद्मशंखौ श्यामौ करीन्द्रकरवंम-

णिभूषणाढ्यो॥रक्ताङ्गुलिप्रचयचुम्बितजानुमध्यौ पद्मा-
लयाप्रियकरौ रुचिरौ स्मरामि ॥९॥ कण्ठं मृणालम-
मलंमुखपंकजस्य लेखात्रयेण वनमालिकया निवीतम्॥
किंवा विमुक्तिवशमन्त्रकसत्फलस्य वृन्तं चिरं भगवतः
सुभगं स्मरामि॥१०॥ रक्ताम्बुजं दशनहासविकासरम्यं
रक्ताधरोष्ठवरकोमलवाक्सुधाढ्यम्। सन्मानसोद्भवचले-
क्षणपत्रचित्रं लोकाभिराममलं च हरेः स्मरामि॥११॥
सूरात्मजावसथगन्धविदंसुनासं भ्रूपल्लवं स्थितिलयोदय
कर्मदक्षम्॥ कामोत्सवं च कमलाहृदयप्रकाशं संचिन्त-
यामि हरिवक्त्रविलासदक्षम् ॥१२॥ कर्णौ लसन्मकर-
कुण्डलगण्डलोलौ नानादिशां च नभसश्चविकासगेहौ॥
लोलालकप्रचयचुम्बनकुञ्चिताग्रौ लग्नौ हरेर्मणिकिरीट-
तटे स्मरामि ॥ १३ ॥ भालं विचित्रतिलकं प्रियचारु
गन्धगोरोचनारचनया ललनाक्षिसख्यम् ॥ ब्रह्मैकधाम
मणिकान्तकिरीटजुष्टं ध्यायेन्मनोनयनहारकमीश्वरस्य
॥१४॥ श्रीवासुदेवचिकुरं कुटिलं निबद्धं नानासुगन्धि
कुसुमैः स्वजनादरेण ॥ दीर्घं रमाहृदयगाशमनं धुनन्तं
ध्यायेऽम्बुवाहरुचिरं हृदयाब्जमध्ये ॥१५॥ मेघाकारं
सोमसूर्यप्रकाशं सुभ्रून्नासं शक्रचापैकमानम् ॥ लोकातीतं
पुण्डरीकायताक्षं विद्युच्चेलं चाश्रयेऽहं त्वपूर्वम् ॥१६॥
दीनं हीनं सेवया दैववत्या पापैस्तापैः पूरितं मे शरी-

रम् ॥ लोभाक्रान्तं शोकमोहादिविद्धं कृपादृष्ट्या पाहि मां वासुदेव ॥१७॥ ये भक्त्याद्यां ध्यायमानां मनोज्ञां व्यक्तिं विष्णोः षोडशश्लोकपुष्पैः ॥ स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः शुद्धा मुक्ता ब्रह्मसौख्यं प्रयान्ति ॥१८॥ पद्मेरितमिदं पुण्यं शिवेन परिभाषितम् ॥ धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥ १९ ॥ पठन्ति ये महाभागास्ते मुच्यन्तेंऽहसोऽखिलात् ॥ धर्मार्थकाममोक्षाणां परत्रेह फलप्रदम् ॥२०॥ इति श्रीकल्किपुराणेऽनुभागवते भविष्ये पद्मप्रोक्तो विष्णुस्तवराजः सम्पूर्णः ॥ ४८ ॥

## अथ श्रीकृष्णस्तवराजप्रारम्भः

श्रीगणेशाय नमः श्रीमहादेव उवाच ॥ शृणु देवि प्रवक्ष्यामि स्तोत्रं परमदुर्लभम् ॥ यज्ज्ञात्वा न पुनर्गच्छेन्नरो निरययातनाम् ॥ १ ॥ कवचं च महेशानि त्रैलोक्यमङ्गलादिकम् ॥ नारदाय च यत्प्रोक्तं ब्रह्मपुत्रेण धीमता ॥ सनत्कुमारेण पुरा योगीन्द्रगुरुवर्त्मना ॥ २ ॥ श्रीनारद उवाच ॥ प्रसीद भगवन्मह्यमज्ञानात्कुण्ठितात्मने ॥ तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम् ॥३॥ अज प्रसीद भगवन्नमितद्युतिपञ्जर ॥ अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ॥४॥ स्वसंवेद्यप्रसीदास्मदानन्दात्मन्ननामय ॥ अचिन्त्यसारविश्वात्मन्प्रसीद परमेश्वर ॥५॥

प्रसीद तुङ्गतुङ्गानां प्रसीद शिवशोभन ॥ प्रसीद गुणगम्भीर गम्भीराणां महाद्युते ॥६॥ प्रसीद व्यक्तविस्तीर्ण विस्तीर्णामामगोचर ॥ प्रसीदार्द्रद्विजातीनां प्रसीदान्तान्तदायिनाम् ॥७॥ गुरोर्गरीयः सर्वेशः प्रसीदानन्तदेहिनाम् ॥जय माधव मायात्मञ्जय शाश्वतशङ्खभृत् ॥८॥ जय शंखधर श्रीमञ्जय नन्दकनन्दन ॥जय चक्रगदापाणे जय देव जनार्दन ॥९॥ जय रत्नवराबद्धकिरीटाक्रान्त मस्तक ॥जय पक्षिपतिच्छायानिरुद्धार्ककरारुण॥१०॥ नमस्ते नरकाराते नमस्ते मधुसूदन ॥ नमस्ते ललितापाङ्ग नमस्ते नरकान्तक ॥ ११ ॥ नमः पापहरेशानः नमः सर्वभयापह ॥ नमः संभूतसर्वात्मन्नमः संभृतकौस्तुभ ॥ १२ ॥ नमस्ते नयनातीत नमस्ते भयहारक ॥ नमो विभिन्नवेशाय नमः श्रुतिपथातिग ॥१३॥ नमस्त्रिमूर्तिभेदेनस्वर्गस्थित्यन्तहेतवे ॥ विष्णवे त्रिदशारातिजिष्णवे परमात्मने ॥ १४ ॥ चक्रभिन्नारिचक्राय चक्रिणे चक्रवल्लभे॥ विश्वाय विश्ववन्द्याय विश्वभूतानुवर्तिने ॥१५॥ नमोऽस्तु योगिध्येयात्मन्नमोऽस्त्वध्यात्मरूपिणे ॥ भक्ति प्रदाय भक्तानां नमस्ते भक्तिदायिने ॥ १६ ॥ पूजनं हवनं चेज्या ध्यानं पश्चान्नमस्क्रिया ॥ देवेश कर्म सर्वं मे भवेदाराधनं तव ॥१७॥ इतिहवनजपार्चाभेदतो विष्णुपूजा नियत हृदय कर्मा यस्तुमन्त्रीचि

राय ॥ सखलु सकलकामान्प्राप्य कृष्णान्तरात्माजनन-
मृतिविमुक्तोऽत्युत्तमां भक्तिमेति ॥१८॥ गोगोपगोपि-
कावीतं गोपालं गोषु गोप्रदम् ॥ गोपैरीड्यं गोसहस्रैर्नौमि
गोकुलनायकम् ॥१९॥ प्रीणयेदनया स्तुत्या जगन्नाथं
जगन्मयम् ॥ धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम्
॥ २० ॥ इति श्रीनारदपञ्चरात्रेज्ञानामृतसारे श्रीकृष्ण-
स्तवराजः सम्पूर्णः ॥ ४९ ॥

## अथ सप्तश्लोकीगीताप्रारम्भः

श्रीगणेशाय नमः ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मा-
मनुस्मरन् ॥ यः प्रयाति त्यजन्देहं सयाति परमां गतिम्
॥१॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुर-
ज्यते च ॥ रक्षांसि भीतानि दिशो द्रवन्तिसर्वे नमस्यन्ति
च सिद्धसङ्घाः ॥ २ ॥ सर्वतः पाणिपातं तं सर्वतोऽ-
क्षिशिरोमुखम् ॥ सर्वतः श्रुतिमँल्लोके सर्वमाचरत्त्य तिष्ठति
॥ ३ ॥ कविं पुराणमनुशासितारणोर्यांसमनुस्म-
रेद्यः ॥ सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः
परस्तात् ॥४॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ५ ॥
सर्वस्य चाहं हृदि सन्निविष्टोमत्तःस्मृतिर्ज्ञानमपोहनं च ॥
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥६॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥

मामेवैष्यसि युक्त्यैव मात्मानं मत्परायणः ॥७॥ इति श्रीमद्भगवद्गीतासूपनिपत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकीगीता समाप्ता ॥ ५० ॥

## अथ पाण्डुरङ्गाष्टकप्रारंभः

श्रीगणेशाय नमः ॥ महायोगपीठे तटे भीमरथ्या वरं पुण्डरीकाय दातुं मुनीन्द्रैः॥समागत्य तिष्ठन्तमानंद-कन्दं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥१॥ तडिद्वाससं नीलमेघावभासं रमामन्दिरं सुन्दरं चित्प्रकाशम् ॥ वरं त्विष्टिकायां समन्यस्तपादं परब्रह्मलिङ्गं० ॥२॥ प्रमाणं भवाब्धेरिदं मामकानां नितम्बः कराभ्यां धृतो येन तस्मात् ॥ विधातुर्वसत्यै धृतो नाभिकोषः परब्रह्म० ॥३॥ स्फुरत्कौस्तुभालंकृतं कण्ठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासम् ॥ शिवं शान्तमीडयं वरं लोकपालं परब्रह्म० ॥४॥ शरच्चन्द्रबिम्बाननं चारुहासं लसत्कुण्डलाक्रान्त-गण्डस्तलाङ्गम् ॥ जपारागबिंबाधरं कञ्जनेत्रं परब्रह्म० ॥ ५ ॥ किरीटोज्ज्वलत्सर्वदिक्प्रान्तभागं सुरैरार्चितं दिव्यरत्नैरनर्घ्यैः ॥ त्रिभङ्गाकृतिं बर्हमाल्यावतंसं पर-ब्रह्म० ॥६॥ विभुं वेणुनादं चरन्तं दुरन्तं स्वयं लीलया गोपवेषं दधानम् ॥ गवां वृन्दकानन्दनं चारुहासं पर-ब्रह्म० ॥ ७ ॥ अजं रुक्मिणीप्राणसंजीवनं तं परं धाम-कैवल्यमेकं तुरीयम् ॥ प्रसन्नं प्रपन्नार्तिहं देवदेवं पर-

ब्रह्म० ॥८॥ स्तवं पाण्डुरङ्गस्य वै पुण्यदं ये पठन्त्ये-
कचित्तेन भक्त्या च नित्यम् ॥ भवाम्भोनिधिं तेऽपि
तीर्त्वान्तकाले हरेरालयं शाश्वतं प्राप्नुवन्ति ॥ ९ ॥
इति श्रीमत्परमहंस परिव्राजकाचार्य श्रीमच्छङ्कराचा-
र्यविरचितं श्रीपाण्डुरंगाष्टकं सम्पूर्णम् ॥ ५१ ॥

## अथ ब्रह्मदेवकृतकृष्णस्तोत्रम्

श्रीगणेशाय नमः ब्रह्मोवाच ॥ रक्ष रक्ष हरे मां च
निमग्नं कामसागरे ॥ दुष्कीर्तिजलपूर्णे च दुष्पारे बहुस-
ङ्कटे ॥१॥ भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे ॥
अतीव निर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥२॥ जन्मोर्मि-
संघसहिते योषिन्नक्रौघसंकुले ॥ रतिस्रोतः समायुक्ते
गंभीरे घोर एव च ॥३॥ प्रथमामृतरूपे च परिणाम-
विषालये॥ यमालयप्रवेशाय मुक्तिद्वारातिविस्मृते॥४॥
बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् ॥ स्वयं च
त्वं कर्णधारः प्रसीद मधुसूदन ॥ ५ ॥ मद्विधाः कति-
चिन्नाथ नियोज्या भवकर्मणि॥ सन्ति विश्वेश विधयो हे
विश्वेश्वर माधव ॥६॥ न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमी-
प्सितः ॥ तथापि न स्पृहा कामे त्वद्भक्तिव्यवधायके
॥७॥ हे नाथ करुणासिंधो दीनबन्धो कृपां कुरु ॥ त्वं
महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥८॥ इत्युक्त्वा
जगतां धाता विरराम सनातनः ॥ ध्यायन् ध्यायन्

मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ९ ॥ ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ॥ स चैवाकर्णविषये न निमग्नो भवेद्ध्रुवम् ॥१०॥ मम मायां विनिर्जित्य स ज्ञानं लभते ध्रुवम् ॥ इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ११ ॥ इति श्रीब्रह्मदेवकृतं कृष्ण स्तोत्रं संपूर्णम् ॥ ६२ ॥

## अथ जगन्नाथाष्टकम्

श्रीगणेशाय नमः ॥ कदाचित्कालिन्दीतटविपिनसङ्गीतकरवो मुदाभीरीनारीवदनकमलास्वादमधुपः ॥ रमाशंभुब्रह्मासुरपतिगणेशार्चितपदो जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥१॥ भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे दुकूलं नेत्रान्ते सहचरिकटाक्षं विदधते॥सदाश्रीमद्वृन्दावनवसतिलीलापरिचयोजगन्नाथः स्वामी नयनपथगा० ॥ २ ॥ महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे वसन्प्रासादान्तः सहजबलभद्रेण बलिना ॥ सुभद्रामध्यस्थः सकलसुरसेवावसरदो जगन्नाथः स्वा० ॥ ३ ॥ कथापारावारः सजलजलदश्रेणिरुचिरो रमावाणीरामस्फुरदमलपद्मेक्षणमुखैः ॥ सुरेन्द्रैराराध्यः श्रुतिगणशिखागीतचरितो जगन्नाथः स्वा० ॥४॥ रथारूढो गच्छन्पथि मिलितभूदेवपटलैः स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ॥ दयासिन्धुर्बन्धुः

सकलजगतां सिंधुसुतयां जगन्नाथः स्वा० ॥ ५ ॥ पर-ब्रह्मापीड्यः कुवलयदलोत्फुल्लनयनो निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ॥ रसानन्दो राधासरसव-पुरालिङ्गनसुखो जगन्नाथः स्वा० ॥ ६ ॥ न वै प्रार्थ्यं राज्यं न च कनकतां भोगविभवं न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् ॥ सदा काले काले प्रम-थपतिनागीतचरितो जगन्नाथः स्वा० ॥ ७ ॥ हर त्वं संसारं द्रुततरमसारं सुरपते हर त्वं पापानां विततिम-परां यादवपते ॥ अहो दीनानाथं निहितमचलं निश्चि-तपदं जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥८॥ इति श्रीजगन्नाथाष्टकं सम्पूर्णम् ॥ ५३ ॥

## अथाच्युताष्टकम्

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम्॥श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं राम-चन्द्रं भजे ॥१॥ अच्युतं केशवंसत्यभामाधवं माधवं श्रीधरं राधिकाराधनम् ॥ इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं नन्दजं सन्दधे ॥ २ ॥ विष्णवे जिष्णवे शङ्खिने चक्रिणे रुक्मिणीरागिणे जानकीजानये॥ बल्लवी-वल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः ॥ ३ ॥ कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदे-वार्चित श्रीनिधे॥अच्युतानन्त हे माधवाधोक्षज द्वार-

कानायक द्रौपदीरक्षक ॥४॥ राक्षसक्षोभितः सीतया शोभितो दण्डकारण्यभूपुण्यताकारणम् ॥ लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्तिना पूजितो राघवः पातु माम् ॥५॥ धेनुकारिष्टकानिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः ॥ पूतनाशोषकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥६॥ वैद्युतद्योतकासंस्फुरद्वाससा प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् ॥ वैजयन्तीप्रभाशोभितोरस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ॥७॥ कुञ्चितैः कुन्तलैर्भ्राजमानानन रत्नमौलिं लसत्कुण्डलं गण्डयोः ॥ हारकेयूरिणं किंकिणीजाज्वलं किंकिणीमञ्जुलं श्यामलं भावये ॥ ८ ॥ अच्युतस्याष्टकं यः पठेत् प्रत्यहं प्रेमतः प्रत्यहं सर्वतः सन्नहम् ॥ सर्वतसुन्दरं कर्तृविश्वंभरस्तस्य वश्यो हरिर्जायते सत्वरम् ॥९॥ इति श्रीमदच्युताष्टकं सम्पूर्णम् ॥ ९४ ॥

## अथ श्रीवेंकटेशक्षमात्रयस्त्रिंशच्छ्लोकी प्रारम्भः

श्रीमद्वेङ्कटशैलवर्यशिखरे रत्नप्रदीपो महांस्त्रैलोक्यान्धतमिस्रचूषणकृते यो जाज्वलीति स्फुटम् ॥ कल्याणव्रजरोध्यनादिसुदृढाघध्वान्तविध्वंसनंकुर्वन्मङ्गलमातनोतु नितरामात्मानुरूपं स नः ॥ १ ॥ महामोहमय्यां भवाब्ध्यन्तरीपे महाधन्वमह्यां मदीयं चरन्तम् ॥ मृगं

स्वान्तनामानमार्तं परीतं महांहोमृगेन्द्रै रमेशाशु रक्ष ॥ २ ॥ प्रभो वेङ्कटेश प्रभा भूयसी ते तमः संछिनत्ति प्रदेशे ह्यशेषे ॥ अहो मे हृदद्रेर्गुहागूढमन्धन्तमो नैति नाशं किमेतन्निदानम् ॥ ३ ॥ अथावैमि वैतन्निदानं हृदाहं सदा त्वत्सपर्याविपर्यासहेतौ ॥ कुमार्गं महामोहमार्गं सनिष्ठः सुनिष्ठातृभावं प्रभो यद्वहामि ॥४॥ जनं तावकीनं किमेनं सुदीनं वृथाजातमेवं वृथोपेक्षसे त्वम् ॥ रमेशैवमेवं वृथोपेक्षसे चेत्क्षमायाः प्रकाशो मदन्येन केन ॥५॥ मदन्यः क्व विप्रेषु वैश्येषु राजस्वथो शूद्रजातिष्वथो सङ्करेषु ॥ निकृष्टः क्व दृष्टः क्व वा ते क्षमायाः प्रकाशो रमेश ध्रुवं स्यात्प्रहीणः ॥ ६ ॥ रमा सा क्व याता क्षमोद्बोधिनी ते ममातुल्यमाता तवोरस्थलस्था॥ ममाभाग्यजातात्तवाभोग्यभूता रमापि प्रभो किंप्रमोदावहा ते ॥ ७ ॥ क्षमा यातु गुप्ता रमाया विधेयं क्व वात्सल्यभूमा यतो दोषिवृन्दम् ॥ महानन्दमेति ह्यहो महत्प्रवर्जं प्रवृत्तिः किमस्य प्रभो वेंकटेश ॥८॥ दया स क्व याता यया दुःखिबन्धो परेषां विषादो वृषादीश नाश्यः ॥ ममामन्ददुःखप्रणाशे प्रकाशं न सा यातुमर्हा किमस्याव्रतं किम् ॥९॥ परित्यज्य भोगं परव्योमनिस्वं महानन्दधामन्यपीहाहि शैले॥ यदर्थं समायास्तदर्थं विचिन्त्य प्रभो वेंकटेश द्रुतं मां सुरक्ष॥१०॥ पुरा कस्य

चिह्नो महापापदाहादभूत्ते भिदा श्रीगिरेर्वेंकटेति॥ ममा
तुल्यपापप्रदाहात्तवाद्याभिधा स्यान्नवीना रमेशाखिले-
ड्या॥११॥ममामन्दपापप्रवृत्तेर्निवृत्तिं यदीक्षेत भो भो
भवान् रक्षितुं माम् ॥ तदामन्दकल्लोलजालाकुलेऽब्धौ
भवान् स्नातुमिच्छेद्धिरामं निरीक्ष्य ॥१२॥ क्व तच्चक्र-
मास्ते निकृत्तारिचक्रं भवद्भक्तचक्रे शुभं येन चक्रे ॥ हरे
चक्रमेतत्तवैतज्जनस्य प्रभूताघचक्रं न किं छेत्तुमीष्टे
॥१३॥ नियुज्य स्वचक्रं ममाघौघचक्रं न चेच्छेत्स्यसि
त्वं तदा कस्य हानिः॥ तवैवेति सत्यं यदेतज्जगत्या वशं
कोऽपि यायादितीक्षा कृतेयम् ॥ १४ ॥ निकृष्टोत्तमं
मा विकुद्धं विधायानुकम्पां विदध्या यदि त्वं रमेश ॥
तदैतत्समीक्ष्येह वश्या भवेयुस्तवानेकलोका निकृष्टाश्च
शिष्टा ॥ १५ ॥ ममोत्तुङ्गचेतस्तुरंगोधिरोहोचितस्ते-
धिरूढो मनोजाधिराजा ॥ निरस्याशु तं भोः समारोह
तं किं वृथोपेक्षसे त्वं त्वदीयं तुरङ्गम् ॥ १६ ॥ मदीये
त्वदीयालयेनादिसिद्धे हृदीश त्वदन्ये परीवारयुक्ताः ॥
कदाचित्समागत्य तिष्ठन्ति तान्नो निरस्येर्यदि स्यात्त-
दीयं गृहं तत् ॥१७॥ महादुष्टकामप्रभृत्यन्त्यवर्णोषिते
स्वान्तसद्मन्यशुद्धे मदीये ॥ निरस्याशु तं ते पदाम्भो-
जयुग्मप्रवेशे न शुद्धं गृहं तद्विधेहि ॥१८॥ भवद्दिव्य-
देहप्रभादीपजालप्रभाभिर्विधुन्वन् प्रकृष्टं तमिस्रम् ॥

त्वदीयैः सह त्वं कुटुम्बै रमेश वसास्मिन् गृहे मे सुखी
स्वान्तनाम्नि ॥ १९ ॥ अविद्यार्कवृक्षं हृदावालरूढ
ममानादिमूलं विभिन्दन् विमूलम् ॥ समावाप्य बीजं
त्वदीयांघ्रिभक्तिप्रकृष्टाग्रबीजं रमेशेह रक्ष ॥२०॥ त्व-
दाज्ञावशेनादधानोऽपि किंचित्स्वतन्त्रोऽहमेवं करोमी
त्यहंयुः ॥ मुधा भावमेनं वृथा भावय त्वं त्वदाधीन्यभावं
सदा भावयेश ॥२१॥ बहिर्भावयामि स्ववाचाखिलानि
त्वदीयान्यमूनीति भो वेङ्कटेश ॥ हृदि त्वध्यवस्ये
ममैवोपभोग्यान्यमूनीति नित्यं जहीदं रमेश ॥ २२ ॥
परस्वस्पृहा मे सदा बोभवीति प्रथीयस्यमुष्याशुभेनैमि
मोदम् ॥ परस्याशु नाशे तदीयं मदीयं भवेदित्यहोमे
दुराशां जहीश ॥ २३ ॥ परालाभलब्धप्रणाशाववेक्ष्य
प्रपद्ये महालाभयुग्मप्रमोदम् ॥ धनाप्तौ परस्य स्वकीय-
स्य नाशं भजामीत्यसूयां जहि श्रीनिवास ॥ २४ ॥
परस्वापहारे मम स्वापहारः परानर्थदृष्टौ ममानर्थ-
लाभः ॥ परानन्दलाभे ममानन्दलाभो महानित्यमूं
मे मनीषां विधत्स्व ॥ २५ ॥ महाकण्टकारिं महा-
सङ्कटं भोस्त्वदंघ्रिप्रफुल्लारविन्दार्पणेन ॥ इमं देशमाधा-
मुद संदधानं भवद्भक्तसंधं महान्तं रमेश ॥२६॥ अक-
ल्याणमेतं सकल्याणमाधाः किमन्त्रादिमूलं न जाने
रमेश ॥ अथावैमि हेतुं तवाव्याजभूयः कृपापारिसिन्धोः
परीवाहमेव ॥२७॥ सकृते पदाब्जप्रचारेण नालं विवा-

यान्यदेशे निवासे निकामम् ॥ इहैवास त्वं ममत्वं वह- त्वं किमर्थं तवार्थं त्वदन्यः प्रपश्ये ॥ २८ ॥ अथैको ऽपि को वा त्वदर्थं त्वदन्यः समालक्षितु वा समारक्षितुं वा ॥ समर्थोऽस्ति लक्ष्मीपते वेङ्कटाद्रेः पते तत्र किं चाधिकं नेह किं वा ॥२९॥ यद्यप्यस्ति तत्रत्वदावास- भूम्ना तदत्रापि च स्यत्त्वदीयागमश्चेत् ॥ ममामन्द पाप- प्रवृत्ति निरीक्ष्यागमश्चेन्न ते स्यादत्ता कस्य हानिः ॥३०॥ अथाल्पस्य हेतोर्विहातुं बहु स्यात्तवेदं न युक्तं प्रभो वेङ्कटेश ॥ अथानल्पपापप्रवृतिर्मदीया निवर्त्या न किं तेऽखिलाघौघनाशिन् ॥३१॥ मृगपतिपदं श्वारूढश्चे- न्निबद्धसटाजटींप्यनलमिभराट्कुंभाभेदिप्रभूतरवे यया॥ प्रथमगुरुभिर्गीतं नेच्ये विडम्बयता मया शुनयसदृशं हास्यं प्राप्यं तथा नियतं त्विदम् ॥३२॥ इत्थं श्रीवेंक टाद्रिप्रभुपदयुगली भक्तवर्यस्य गङ्गाविष्णोर्याञ्चाविशे- षाद् व्यरचिकृतिरियं वेङ्कटेशक्षमायाः ॥ श्रीशैलानन्त- वर्यान्वयसमुदयिना वेङ्कटार्येण भक्त्या निक्षिप्ता तत्प- दाब्जे मुदमतितनुतां तन्वतां स्वान्तदेशे ॥३३॥ इति श्रीमदनन्ताचार्यविरचितं श्रीवेङ्कटेशक्षमात्रयस्त्रिंश- च्छ्लोकोस्तोत्रम् सम्पूर्णम् ॥ ५५ ॥ श्रीरस्तु ॥

## अथ भावविज्ञप्तिस्तवः

श्रियः पतिं तत्पदपंकजस्पृहातृणीकृतान्यं यतिशे-

खरं तथा ॥श्रीरङ्गसूरिं मम देशिकेन्द्रं श्रीमच्छठारिं च नितान्तमाश्रये ॥१॥ यद्वक्षःस्थलमन्दिरं प्रविलसन्माणिक्यमुक्तावलीदोलान्दोलनरागलोलहृदया निःसीमभाग्योदया ॥ श्रीदेवी समलंकरोति करुणापीयूषपाथोनिधिश्चेतः सद्मनि सर्वदा विजयतां श्रीरङ्गराजः स मे ॥ २ ॥ भागं यस्य च दक्षिणं भगवती सौभाग्यसौशील्यभूर्भूदेवी सततं विभूषयति यद्वामं च लीलाभिधा ॥ देवी नीलसरोजसुन्दररुचिःसौन्दर्यलीलागृहं चेतःसद्मनि सर्व० ॥ ३ ॥ निर्लोभैरपि निःस्पृहैरपि दरानन्दैकमग्नैरपि प्रेम्णा सस्पृहमात्तलोभमसकृद्यद्रूपमालोक्यते ॥ नैतावन्न भवन्त्यनुक्षणमभिप्रेक्ष्यापि तृप्तास्ततश्चेतः स० ॥ ४ ॥ श्रीदेवीपरिशोभिताच्छहृदया भूभूषितादक्षिणे लीलास्वीकृतवामभागरुचिरा मूर्तिः परा राजते ॥ यस्यैवोत्सवमूर्तिरित्यभिधया चेतश्चमत्कारिणी चेतः स० ॥ ५ ॥ यस्याङ्घ्रिस्मरणं समस्तविपदामुन्मूलनं संपदां सर्वासामभिवृद्धिदं स्वजनतोद्धारप्रवृद्धाग्रहम् ॥ सद्विद्योदयदं जवादभयदं श्रेयःसमूहप्रदं चेतः स०॥६॥ भ्रान्त्वाभूवलयं दिशोऽपि निखिला लोकानधस्थांस्तथैवोर्ध्वस्थानभिवीक्ष्य नात्मसदृशं लावण्यलक्ष्मीः स्वयम् ॥प्रेम्णामुं समुपाश्रितेति जनधीर्यद्दर्शने जायते चेतः स० ॥७॥ इन्दौ शारदरात्रिकैरवसभासौभाग्यशो-

भाकरे पद्मे पद्मनिवासिनीमुखनिभेप्यत्यन्तमन्दादरा॥
यस्मिन्नीक्षणगोचरे सति नृणां दृष्टिः सदाजायते चेतःस०
॥८॥ रेवत्यां स्वजनाभिलाषचयधुक्पादाब्जयुग्मानतेः
श्रीदेवीविलसत्सुवक्षस इलालीलाश्रितस्य प्रभोः ॥
यात्रा यस्य विमानगस्य नगरे संजायते सर्वतश्चेतः स०
॥९॥ कति कति न विलोकितानि लोके हरिसदनानि
मनोमनोहराणि ॥ तदपि मम रतिः सुरासुरार्च्ये प्रति-
दिनमेधत एवरङ्गराजे ॥१०॥ पुर्य्यः सप्त नमोऽस्तु वः
प्रतिदिनं मोक्षाख्यभिक्षाप्रदा यूयं वः शुभकीर्तयः प्रति-
महाशास्त्रं प्रसिद्धाश्चिरात् ॥ क्षन्तव्यं मम मानसं तु
चपलं संसेव्य युष्मानपि प्रेम्णा शान्तिमुपैति नैवहि
विना श्रीरङ्गराजप्रभुम् ॥११॥ दृष्टेव काशी मथुरा च
काञ्चीयुगं प्रभो द्वारवती तथैव ॥ पुर्य्यप्ययोध्या न
मयानुभूतं कुत्रापि युष्मात्पुरवाससौख्यम्॥१२॥ तर्क-
व्याकरणामृताब्धिविरता साहित्यमन्दादरावेदांतेष्वपि
निःस्पृहापि च महाकोशेषु मुक्तादरा ॥ चेतोवृत्तिरियं
प्रभो विरहिणी कान्तेव सद्वंशजा त्यक्त्वा ये चरणाम्बुजं
न रमते श्रीरङ्गभर्तुः प्रभो ॥ १३ ॥ प्रभो गङ्गायां वा
सरिति यमुनायामपि मुदा प्रयागे वा तिष्ठन् शयन-
मशनं वाऽप्यनुभवन् ॥ कदा श्रीरङ्गेशप्रभुचरणसेवासु-
खमहं पुनः प्राप्स्यामीति प्रतिलवमनुध्याननिरतः
॥ १४ ॥भक्ताभीप्सितपूर्तिपण्डितपदाम्भोजैकवारस्मृ-

तेर्विश्वापत्प्रशमप्रवीणहृदयश्रीरङ्गराजप्रभो ॥ आयासः
कतमस्तवाऽस्ति भगवन् भावत्कपादाम्बुजद्वन्द्वाऽदूरनि
वासवाञ्छितफलं दातुं दयाब्धेऽद्यमे ॥ १५॥ इन्द्रायै-
न्द्रपदं निधीश्वरपदं यक्षाधिराजाय वा दारिद्र्यापरमूर्तये
निरुपमैश्वर्यंसुदाम्ने मुदा॥दातुंगाढनिबद्धसत्परिकरस्या-
सीन्नलो भांकुरो मद्वाञ्छापरिपूरणे कथमहो क्षोभोऽस्ति
लो भस्तव॥ १६॥ नैन्द्रे पदे न निधिनाथपदे पदे न क्ष्मा-
पालकस्य न परत्रच मेऽस्ति वांछा ॥ श्रीरङ्गराज भव-
देकसमीपवासवाञ्छास्तिसाऽपि भवता नहि पूर्यते किम्
॥१७॥ जिह्वे निरर्गलतरासि विचारय त्वं किं जल्पसि
प्रणतवत्सल एषईशः॥यद्यत्करोति स विभुस्तदसंशयांशं
विद्धि स्वकीयजनतोभयलोकपथ्यम् ॥१८॥ युष्मत्पा-
दाम्बुरुहविरहव्याधितप्ताशयोऽयं दासो जल्पेत्किमपि
यदिह श्रापते तन्न चिन्त्यम् ॥ जाने यद्यप्यखिलजगतां
श्रेयसे ते प्रवृत्ति बद्धोत्साहां त्यजति न मनोऽथाऽपि
वाचालतां मे ॥ १९॥ श्रीरंगराज हृदयं भवदंघ्रियुग्मे
देहस्तु संचरित संप्रति यत्र कुत्र ॥ इच्छा भवेत्तव यदा
भगवंस्तदाऽयं कार्यस्त्वदीयपदपङ्कजसंनिधिस्थः।२०॥
श्रीरङ्गराज तदलं बहुजल्पनेन यत्र क्व वा भवतु भाग्यव-
शात्स्थितिर्मे॥चेतस्थितिस्तु भवदीयददाब्जयुग्मे भूया-
दहर्निशमियं चरमाऽर्थना मे ॥ २१ ॥ श्रीवेणुगोपाल

शठारिनाथश्रीभाष्यकारा अपि चारुरूपाः॥ श्रीसौम्य-जामातृमुनिश्च नित्यं यद्दक्षिणे भान्ति कृतप्रतिष्ठाः ॥२२॥ श्रीमद्रमारमणवेङ्कटशैलनाथाऽनाथं जनं विविधतापभियाऽभियातम् ॥ यद्वामभागपरिशोभितदिव्य-रूपः शं पश्य मां निजकटाक्षविचित्रपातैः ॥ २३ ॥ सतस्तलोकस्म मनोहरन्ती निःसीमसौन्दर्यभरेण नित्यम् ॥ मूर्तिर्मनो मोहमतो स्म सा मे श्रीरंगनाथस्य दयासुधाब्धेः ॥ २४ ॥ हे वेणुगोपाल मदीयगोगणः समर्पितोऽस्त्येव भवत्पदान्तिके॥ स चेद्विमार्गं श्रयिता तदा तु तद्गोपालतालाञ्छनकृत्तव प्रभोः ॥ २५ ॥ ततः प्रणामान् शतशः सहस्रशः समर्प्य विज्ञापयतीह किंकरः ॥ एष त्वदीयः स मदीयगोगणो विमार्गगो नैव भवेतथा कुरु ॥ २६ ॥ शठारे स्वामिन् हे मम तव पदाम्भोरुहयुगं श्रितस्यापीहैते दृढतरहठादिन्द्रिय-शठाः ॥ तुदन्ति स्वान्तं तत्किमिति शठशत्रोस्तव जगत्पवित्रां कीर्तिं नो हरति तदिमान् दण्डय विभो ॥२७॥ वेदान्ताम्बुधिमन्थते नहि सुरा नैवाऽसुरानाऽचलो नाहिर्नात्मनि कूर्पता विषभिया शंभुश्च नापेक्षितः ॥ यस्याऽशेषमनुष्यपेयमकरोद्वेदार्थसारामृतं यस्तं त्वद्भुतविष्णुमानसमना रामानुजार्यं मुहुः ॥ २८ ॥ येऽपारसंसारसुद्रमग्नानज्ञान् विलोक्यातिदयार्द्रचि-

त्ताः ॥ संदर्शयामासुरमुं सुमार्गं श्रीलक्ष्मणार्यान्नम मे
मनस्तान् ॥ २९ ॥श्रीभाष्यनिर्माणयशःशरीरमद्याऽपि
येषामतिचित्रमस्ति ॥ अमृत्युमार्यं चरसाऽप्यजीयं
श्रीलक्ष्णार्यान् नम तान् मनो मे॥३०॥ आत्मप्रवर्ति-
तमनुत्तमसंप्रदायं द्रष्टुं पुनर्धृतजनीनिव लक्ष्मणार्यान्॥
मन्यन्त उत्तम जनानिह यान्मनस्तान् जामातृसंज्ञकमुनी
न्नम सौम्य पूर्वान् ॥३१॥ अञ्जनाचल शृङ्गारे श्रीनि-
वासे रतिर्मम ॥ कालत्रये निरावाधा भूयादित्यर्थ्यते-
ऽनिशम् ॥३२॥ वैश्या धार्मिककर्ममग्नमनसो यत्पाद-
पद्मद्वयीभक्तिप्रेमरसप्रभिन्नमनसः कुर्वन्ति निर्हेतुकीम्॥
यस्तेषां परिपूर्णतां नयति हृद्वाञ्छाः क्षणेनाऽखिला-
श्चेतःसद्मनि सर्वदा विजयतां श्रीरङ्गराजप्रभुः ॥३३॥
काले नेत्रधरांकभूमितशुभे वर्षेऽथ मासे शुभे विद्वद्वन्दि-
तकृष्णमिश्रतनयैः श्रीरंगपादाश्रयैः ॥ रामाचार्यपुरः-
सरैर्विरचिता यस्य प्रतिष्ठा मुदा चेतः सद्मनि सर्वदा विज-
यतां श्रीरंगराजः प्रभुः ॥३४॥ श्रीमदीयपदपंकजस-
म्पत्कृष्णमिश्रकुलेजेष्वखिलेषु॥अस्ति ते निरुपमा करु
णादृक् तत्कृतेऽत्र पुनरुक्तिरियं मे ॥३५॥आर्या रामा-
चार्याः स्वाचरणारामशरणाश्च ॥ विश्वख्यातसुयशसः
सोऽयंश्रीरंगनाथ ते महिमा ॥ ३६ ॥ परांकुशा वादि-
विद्वद्गजराजपरांकुशाः ॥ आसन् यत् पितृपादा मे

महिमा सोऽपि तावकः ॥३७॥ भक्तिसारा भक्तिसारा भक्तिसारोपमानकाः ॥ भवन्ति भ्रातरो मे यन्महिमा सोऽपि तावकः ॥३८॥ मत्कनिष्ठान् श्रीनिवासमधुसूदनसंज्ञकान् ॥ घनश्यामं च गोपालं पाहि श्रीरंग सर्वदा ॥३९॥ श्रीरंगराज करुणावरुणालय त्वत्पादाब्जयुग्मशरणः किल वासुदेवः ॥ स्वप्नेपि नाऽन्यशरणोऽस्ति ततोऽत्र कार्या नित्यं दयाद्दगिह दासजने दयाब्धे ॥ ४० ॥ नारायणात्मजनुषो मम वासुदेवेत्याख्यस्य राम गुरुवर्य्यकृपाप्तनीतेः॥एषा कृतिर्विजयतामुपपुण्डरीकं श्रीमत्फतेपुरजनैर्हितरंगधाम्नः ॥ ४१ ॥ बिहांणीपत्तनीय श्रीरंगधामैकजीविना ॥ श्रीमता वासुदेवेन कृत श्रीरंगराट्स्तुतिः ॥ ४२ ॥ इति भावविज्ञप्ति नामा स्तवः सम्पूर्णः ॥ ९६ ॥

## अथरामरक्षास्तोत्रप्रारम्भः

श्रीगणेशाय नमः ॥ श्रीसीतारामचन्द्राभ्यां नमः ॥ अथ रामरक्षास्तोत्रप्रारम्भः ॥ अस्य श्रीरामरक्षास्तोत्रमन्त्रस्य बुधकौशिक ऋषिः ॥ श्रीसीतारामचन्द्रो देवता अनुष्टुप् छन्द ॥ सीता शक्तिः ॥ श्रीमद्धनुमान् कीलकम् श्रीरामचन्द्रप्रीत्यर्थे रामरक्षास्तोत्रजपे विनियोगः ॥ अथध्यानम् ॥ ध्यायेदाजानुबाहुं धृतशरधनुषंबद्धपद्मासनस्थंपीतं वासो वसानं नवकमलदल-

स्पर्धिनेत्रं प्रसन्नम् ॥ वामांकारूढसीतामुखकमलमिल-
ल्लोचनं नीरदाभं नानालंकारदीप्तं दधतमुरुजटामण्डनं
रामचन्द्रम् इति ध्यानम् ॥ चरितं रघुनाथस्य शतको-
टिप्रविस्तरम् ॥ एकैकमक्षरं पुंसां महापातकनाशनम्
॥१॥ ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम् ॥
जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम् ॥२॥ सासि
तूणधनुर्बाणपाणिं नक्तञ्चरान्तकम् ॥ स्वलीलया जगत्रा-
तुमाविर्भूतमजं विभुम् ॥३॥ रामरक्षां पठेत्प्राज्ञः पापघ्नीं
सर्वकामदाम् ॥ शिरो मे राघवः पातु भालं दशरथा-
त्मजः ॥ ४ ॥ कौशल्येयो दृशौ पातु विश्वामित्रप्रिय
श्रुती ॥ घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः॥५॥
जिह्वां विद्यानिधिः पातु कण्ठं भरतवन्दितः ॥ स्कन्धौ
दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ॥ ६ ॥ करौ
सीतापतिः पातु हृदयं जामदग्न्यजित् ॥ मध्यं पातु
खरध्वंसी नाभिं जाम्बवदाश्रयः ॥७॥ सुग्रीवेशः कटिं
पातु सक्थिनी हनुमत्प्रभुः ॥ ऊरू रघूत्तमः पातुः रक्षा-
कुलविनाशकृत् ॥८॥ जानुनी सेतुकृत्पातु जंघे दशमु-
खान्तकः ॥ पादौ विभीषणश्रीदः पातु रामोखिलं वपुः
॥९॥ एतां रामबलोपेतां रक्षा यः सुकृती पठेत् ॥ स
चिरायुः सुखी पुत्री विजयी विनयी भवेत् ॥ १० ॥
पातालभूतलव्योमचारिणश्छद्मचारिणः॥न द्रष्टुमपि-

शक्तास्ते रक्षितं रामनामभिः ॥ ११ ॥ रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ॥ नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति ॥ १२ ॥ जगज्जैत्रैकमन्त्रेण रामनाम्नाभिरक्षितम् ॥ यः कण्ठे धारयेत्तस्य करस्थाः सर्वसिद्धयः ॥ १३ ॥ वज्रपञ्जरनामेदं यो रामकवचं स्मरेत् ॥ अव्याहताज्ञ सर्वत्र लभते जयमङ्गलम् ॥ १४ ॥ आदिष्टवान्यथा स्वप्ने रामरक्षामिमां हरः ॥ तथा लिखितवान्प्रातः प्रबुद्धो बुधकौशिकः ॥ १५ ॥ आरामः कल्पवृक्षाणां विरामः सकलापदाम् ॥ अभिरामस्त्रिलोकानां रामः श्रीमान्स नः प्रभुः ॥१६॥ तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ॥ पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥१७॥ फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ ॥ पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥ १८ ॥ शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्व धनुष्मताम् ॥ रक्षःकुलनिहन्तारौ नस्त्रायेतां रघूत्तमौ ॥ १९ ॥ आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषङ्गसङ्गिनौ ॥ रक्षणाय मम रामलक्ष्मणावग्रतः पथि सदैव गच्छताम् ॥२०॥ सन्नद्धः कवची खड्गी चापबाणधरो युवा ॥ गच्छन्मनोऽरथोऽस्माकं रामः पातु सलक्ष्मणः ॥२१॥ रामो दाशरथिः शूरो लक्ष्मणानुचरो बली ॥ काकुत्स्थः पुरुषः पूर्णः कौशल्येयो रघूत्तमः ॥२२॥ वेदान्तवेद्यो यज्ञेशः पुरा-

णपुरुषोत्तमः ॥ जानकीवल्लभः श्रीमानप्रमेयपराक्रमः
॥२३॥ इत्येतानि जपेन्नित्यं मद्भक्तः श्रद्धयान्वितः ॥
अश्वमेधाधिकं पुण्यं संप्राप्नोति न संशयः ॥ २४ ॥
रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् ॥ स्तुवन्ति
नामभिर्दिव्यैर्न ते संसारिणो नराः ॥२५॥ रामं लक्ष्मण-
पूर्वजं रघुवरं सीतापतिं सुन्दरं काकुत्स्थं करुणार्णवं
गुणनिधिं विप्रप्रियं धार्मिकम् ॥ राजेन्द्रं सत्यसंधं दश-
रथतनयं श्यामलं शान्तमूर्तिं वन्दे लोकाभिरामं रघुकु-
लतिलकं राघवं रावणारिम् ॥२६॥ रामाय रामभद्राय
रामचन्द्राय वेधसे ॥ रघुनाथाय नाथाय सीतायाः पतये
नमः ॥२७॥ श्रीराम राम रघुनंदन राम राम श्रीरामराम
भरताग्रज राम राम ॥ श्रीराम राम रणकर्कश राम राम
श्रीराम राम शरणं भव रामराम ॥२८॥ श्रीरामचन्द्रच-
रणौ मनसा स्मरामि श्रीरामचन्द्रचरणौ वचसा गृणामि ॥
श्रीरामचन्द्रचरणौ शिरसा नमामि श्रीरामचन्द्रचरणौ
शरणं प्रपद्ये ॥ २९ ॥ माता रामो मत्पिता रामचन्द्रः
स्वामी रामो मत्सखा रामचन्द्रः ॥ सर्वस्वं मे रामचन्द्रो-
दयालुर्नान्यं जाने नैव जाने न जाने ॥३०॥ दक्षिणे लक्ष्म-
णो यस्य वामे च जनकात्मजा ॥ पुरतो मारुतिर्यस्य तं
वन्दे रघुनन्दनम् ॥ ३१ ॥ लोकाभिरामं रणरङ्गधीरं
राजीवनेत्रं रघुवंशनाथम् ॥ कारुण्यरूपं करुणाकरं तं
श्रीरामचन्द्रं शरणं प्रपद्ये ॥ ३२ ॥ मनोजवं मारुततु-

ल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ॥ वातात्मजं वानरयूथमुख्यं श्रीरामदूतम् शरणं प्रपद्ये ॥ ३३ ॥ कूजन्तं राम रामेति मधुरं मधुराक्षरम् ॥ आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ३४ ॥ आपदामपहर्त्तारं दातारं सर्वसंपदाम् ॥ लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ ३५ ॥ भर्जनं भवबीजानामर्जनं सुखसंपदाम्॥तर्जनं यमदूतानां राम रामेति गर्जनम् ॥३६॥ रामो राजमणिः सदाविजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ॥ रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥३७॥ राम रामेति रामेति रमे रामे मनोरमे ॥ सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ३८ ॥ इति श्रीबुधकौशिककविरचितं श्रीरामरक्षास्तोत्रं सम्पूर्णम् ॥ ६७ ॥

## अथ राममहिम्नप्रारम्भः

श्रीगणेशाय नमः ॥ अथ श्रीराममहिम्नप्रारम्भः ॥ ॐ महामोहावर्तै पतितमिह मां ते शरणगं शरण्यस्त्वत्तोऽन्यः प्रभवति न कोऽप्यत्र जगति ॥ अतस्त्वत्पादाम्भोरुहयुगलमाश्रित्य नितरामितीहेसंसाराद्वृजिननिचयादुद्धर विभो ॥१॥निजाव्यक्तेनेदं जगदखिलमिच्छादिकरणैः समुत्पन्नं कृत्वाऽवसि तु सततं श्रीरघुपते ॥

युगान्तेसर्वं वै हरसि किल रौद्रेण वपुषा त्वमेकः सर्वात्मन्विहरसिनचान्यो गुणनिधे ॥२॥ रमन्ते योगीन्द्रास्त्रिपुरहरमुख्यास्त्वयि सदा समाधौविश्वात्मन्नियमितहृषीका रघुपते ॥ तथाऽप्येते पारं निखिलनिगमागोचर विभो महिम्नस्ते नूनं गमयितुमलं नैव कुशलाः ॥३॥ कदाचिद्धौमान्वै गणमतिकणान्कोऽपिमतिमांस्तथा पारावारोदकलवचयान्वै रघुपते ॥ क्वचिन्नक्षत्रौघं वयति गणनायां नयति वै गुणानां ते पारंगमयितुमलंनैव कुशलाः ॥४॥ कृतं सत्यं भूमन्सगुणमगुणं रूपमुभयं चिदानन्दं तद्वै निखिलनिगमैरण्यविदितम् ॥ समष्टिर्व्यष्टिस्तेविलसति विराड्रूपमपरंतदेतद्वै किंचित्स्फुरति हृदये चैव विदुषाम् ॥५॥ विरञ्चीशेन्द्राद्यैरमरनिवहैः सिद्धमुनिभिः स्तुतस्त्वं भूभारव्यसनमपहर्तुं सुरपते ॥ विभुः कौसल्यायां दशरथगृहे स्वाकृतियुतः समुद्भूतश्चक्रे निजपदकृतार्थां वसुमतीम् ॥६॥ मुनेर्विश्वामित्राच्छरणदबलां चाप्यतिबलांमहाविद्यां प्राप्यप्रणनजनसौभाग्यद विभो॥ शरेणैकेन त्वं निशिचरवधूं चातिमहतीं महाघोरां हत्वा विपिनभयं चैव कृतवान् ॥७॥ करालास्यं घोरं निशिचरयुगं कौणपवरं श्रुतीनां द्वेष्टारं मुनिमखनिघातेच निरतम् ॥ सुबाहुं मारीचं निशितविशिखांश्चोरसि दृढं निहत्यैकैकेनाहुतमिह जुगोप्थाकृतधियाम् ॥ ८ ॥ शिला-

भूता शापाच्चरणरजसा गौतमवधूं यथापूर्वां कृत्वा परम-
सुभगां चातिविमलाम् ॥ महोत्तुंगं चापं सपदि शितिक-
ण्ठस्य सुदृढं द्विधा खण्डं चक्रे जनकनगरीं प्राप्य मुनिना
॥९॥शरद्राकेशास्यां विमलकलधौताङ्गरुचिरां स्फुरद्र-
त्नाकल्पां जनकतनयांविश्वजननीम् ॥ शुभाहे यद्रामो
विधिवदुपयेमे सुललितां महेन्द्रौघस्नेहामरमुकुटनीरा-
जितपदम् ॥१०॥ महाघोरं त्रुट्यत्त्रिपुरहरचापस्यनिनदं
समाकर्ण्य क्रोधाद्भृगुकुलपतेःक्षत्रियरिपोः ॥ पथि प्राप्त-
स्यास्य स्मयमपि जहर्थं त्वमतुलं महावीरप्रद्योतनकुल-
मणे पाहि नितराम् ॥११॥ सुराणां रक्षायै सपदि पितु-
राज्ञां सकरुणां समादाय प्रागाद्वनमनुजयुक्तो वनितया॥
जनस्थानं प्राप्यामलवटतरूणां फलवतामधश्चक्रे वासं
दनुजकुलनाशाय च विभो ॥ १२ ॥ प्रभोर्लंकेशस्य
प्रबलतमवीर्य्यस्य भगिनीं विरूपां कृत्वा तद्दनुजखरमु-
ख्यान्निशिचरान् ॥ सुरारातीन्हत्वा द्विजकुलनिघातेषु
निरतान्निरातंकं चक्रे विपिनमपि सेव्यं जनपदैः ॥१३॥
दशग्रीवाज्ञप्तः कनकमृगरूपेण विरचन्विचित्रो मारीचः
प्रसभमभियातः स्वनिकटे ॥ असौ मयावीति
प्रणतजनसौभाग्यद विभो त्वया ज्ञात्वा नीतः सपदि
विशिखेनान्तकपुरीम् ॥ १४ ॥ मुमूर्षु पौलस्त्यः कपट
कटुवेषेण कुमतिः परोक्षं यत्सीताहरणमकरोच्छ्रीरघुपते

सुराणां रक्षायै रजनिचरनाथस्य हननं विमृष्यैतत्सर्वं
खरहर तवैवेङ्गितमभूत् ॥१५॥ वियोगेजानक्यास्त्विह
मनुजभावेन विचरञ्जटायुं दृष्ट्वा वै विपिनगतमासन्नमर-
णम् ॥ त्वया तस्योद्धारः स्वकरकमलेनैव विहितस्तवैत-
द्वात्सल्यं विलसति हि भक्तेषु नितराम् ॥१६॥ कबन्धं
क्रव्यादं निशितकरवालेन महता द्रुतं हत्वा पम्पातटम-
नुजयुक्तश्च गतवान् ॥ युवां दृष्ट्वाज्ञातुं प्लवगपतिनावायु-
तनयः समाज्ञप्तश्चागाद्वरद तव राद्धान्तमखिलम् ॥१७॥
समाकर्ण्यंत्वत्तःसकलमसुरारातिममलं विदित्वा निःशङ्कं
दशरथसुतं त्वां रघुपते ॥ महोत्साहान्नीतः सपदि गिरि-
पृष्ठं हनुमता प्रभो सुग्रीवेण प्लवगपतिना सख्यमकरोत्
॥१८॥ कपीशं हत्वा वै बलिनमतुलावीर्यसुभरं दुराधर्षं
देवैरसुरनिवहैरप्यसुलभम् ॥ त्वया सुग्रीवाय प्लवगकुलरा
जेन्द्रपदवी प्रदत्ता देवेश प्रणतजनवात्सल्यजलधे ॥१९॥
प्रतापान्ते नूनं सलिलनिधिमुल्लंघ्य तरसा गतो लङ्कां
दृष्ट्वा जनकतनयां चातिविमलाम् ॥ निहत्याक्षं दग्ध्वा
पुरमथसमुत्पाट्यविपिनं हनूमांनस्त्वत्पादंपुनरपि समा
गाद्रघुपते ॥२०॥ विदित्वा सीतायाः पवनजमुखाद्दुः-
खमतुलं निहन्तुं क्रव्यादेश्वरमपि तथा राक्षसकुलम् ॥
प्रतस्थे सुग्रीवाङ्गदहनुमदाद्यैः कपिभटैः सुगुप्तामादाय
प्लवगकुलसेनां च महतीम् ॥२१॥ प्लवङ्गैर्भल्लूकैरमति-

भुजवीर्य्यैं परिवृतो निषङ्गी कोदण्डं शरमपि दधानः करतले॥क्रमान्मार्गं तीर्त्वा सलिलनिधितीरे सुविपुले गतस्त्वं सुग्रीवाङ्गदहनुमदाद्यैः कपिवरैः ॥२२॥ तवाग्रे तत्रागाच्छरणद दशास्यानुजवरः प्रपन्नस्त्वत्पादाम्बुजयुगलमाराध्यममरैः॥कृपापारावारामितगुणनिधे सिंधुपुलने त्वया दत्ता तस्मै वृजिनहर लङ्केशपदवी ॥२३॥ उषित्वा तत्तीरे त्रिदिनमरविन्दाक्षःकपिभिस्ततः किञ्चित्क्रोधान्नियमभययातो जलनिधिः ॥ पुरः प्रह्वीभूतो रुचिरवचनैः श्रीरघुपते स्तुतिं चक्रे नत्वा पुलकिततनुर्गद्गदगिरा ॥२४॥ अकूपारस्योक्त्या दशदिशि गतैर्वानरभटैस्त्वयज्ञाप्तैर्नीता निजभुजबलै प्रस्तरचयाः ॥ पुनस्तैः पाषाणाविपुलमिह नीलेन रचितो महासेतुर्बद्धो तदिह तव नाम्नोऽस्ति महिमा ॥२५॥ यदेते पाषाणः सततसलिले मज्जनपरास्तरन्त्यब्धौ नूनं जगति परमं चाद्भुतमिदम्॥किमाश्चर्य्यं यस्येक्षणचलितनेत्रान्तविभवात्कटाक्षात्ते नूनं कति कति च लोकाण्डरचना ॥ २६ ॥ समुतार्याशेषान्प्लवगनिकराल्लँक्ष्णयुतस्ततो लङ्कां गत्वा स्वयमपि समुत्तीर्य जलधिम् ॥ निहत्याजौ सर्वान् रजनिचरवृन्दांश्च सकुलं दशग्रीवं हत्वा ह्यभयममरैः स्वर्गमकरोत् ॥ २७ ॥ विरञ्चीशेन्द्राद्यैरमरनिवहैः सिद्धमुनिभिः स्तुतः स्तोत्रैः कृत्वा कुसुमचयवृष्टिं सुवि-

पुलाम् ॥ कटाक्षेणैवैतांस्त्रिदशवरमुख्यान्करुणया विलोक्य प्रध्वस्तं भयमखिलमेषां रघुपते ॥ २८ ॥ प्रभो त्वं सुग्रीवप्रमुखविविधैर्वानरभटैर्युतो वैदेहीं वै दहनपुरि दत्तां सुविपुलाम् ॥ समादाय स्थित्वा धनपतिविमाने सुविपुले वितन्वन्स्वेषां वै मुदमतुलमागान्निजपुरीम् ॥ २९ ॥ सहस्रं वर्षाणामयुतमपि कुर्वन्वसुमतीं सनाथां वैदेहीं रमणकृतवान्न राज्यमतुलम् ॥ अयोध्यायां देवासुरनृपकिरीटाग्रनिहितैर्महारत्नैर्नीराजितचरणपंकेरुह विभो ॥ ३० ॥ कृशानुं शेषाद्यः शशधरयुतो वीजमिति ते भजन्ति ध्यायन्वै तव चरणपंकेरुहयुगम् ॥ गृहे तेषां पद्मा विहरति मुखे गीः सुललिता सुभुक्त्वा भोगान्वैतव वरपदं यान्ति परमम् ॥ ३१ ॥ स्वबीजं शेषाग्नौ दहनमपरश्चैव पवनो नमोऽन्ताः षड्वर्णाः परमपदहेतुश्च भजताम् ॥ इमं मन्त्रं यो वै जपति गुरुवक्त्रादधिगतं जगत्पूज्यो भोगान्भुवि परमदिव्यान्स लभते ॥ ३२ ॥ घनश्यामं विद्युत्प्रभवसदृशाकल्परुचिरं सरोजाक्षं चैव स्मितमदसुलावण्यसुभगम् ॥ तडिद्वर्णां वामे जनकतनयां राघवमुखं प्रपश्यन्तीं ध्यायन्भजति परमां सिद्धिमतुलाम् ॥ ॥ ३३ ॥ अनन्तान्याहुर्वै तव विविधरूपाणि भगवन्न तान्विज्ञातुं वै कथमपि समर्थाश्च विबुधाः ॥ विभूतीनामन्तस्तव विमल को वेत्ति नितरामतद्व्यावृत्त्या वै

त्वयि सकलवेदाश्च चकिताः ॥ ३४ ॥ तवेदं यद्रूपं सजलजलदाभं सुललितं तदेतत्तत्त्वज्ञा मुनिवरगणा हृत्सरसिजे॥ मुहुर्ध्यायन्ते वै विगतविषयाः संगरहिता ययुर्नित्यानन्दं पदममरवन्द्यं रघुपते ॥३५॥ त्वमिन्द्रस्त्वं सोमस्त्वमसि वरुणस्त्वं हुतवहस्त्वमापस्त्वं भूमिस्त्वमसि पवनस्त्वं च गगनम्॥विरञ्चिस्त्वं रुद्रस्त्वमसि सकलं दृश्यमिह यत्त्वदन्यद्वस्त्वेकं नहि जगति भूमन् रघुपते ॥ ३६ ॥ त्वमेवादौ भूमिर्निगमनिचयानां जलनिधौ निमग्नानां चैवोद्धरणमकरोर्मीनवपुषा ॥ सुधाकामैर्नीतं सलिलनिधिनिर्मन्थनविधौ गिरिं पृष्ठे त्वं च प्रभुकमठरूपेण धृतवान् ॥३७॥ निहित्याजौ दैत्यं प्रलय जलधौ घोरमतुलं हिरण्याक्षं कृत्वा वपुषमपि वाराहविपुलम्॥ समुद्धारं भूमेर्गिरिकुलयुतायाः सरभसं महादंष्ट्राग्रेणामितगुणनिधे त्वं च कृतवान् ॥३८॥ स्वभक्तं प्रह्लादं परमविदुषामार्यममलं विदित्वार्त्तं पित्रा कृतिविविधदण्डं कुमतिना ॥ विधायोग्रं रूपं नरहरिविचित्रं त्रिनयनं जघन्थ त्वं दैत्येश्वरममितवीर्यं रघुपते ॥३९॥ सुनासीरैश्वर्यं हतमतुलवीर्येण बलिना विदित्वेदं राम प्रणतजनवात्सल्यजलधे॥ स्तुतस्त्वं शक्राद्यैरमरनिवहैर्वामनवपुर्विधायोग्रं वैरोचनमपि बबन्धामररिपून्॥४०॥ कुलक्षात्त्रं सप्तत्रिकमपि च कृत्वा रघुपते जघन्थ त्वं राम

प्रबलमिह शस्त्रास्त्र विशदम् ॥ निहत्योग्रान्कंसप्रमुखदि-
तिजान्यादवकुले त्वमाविर्भूत्वा श्रीरमण भुवि भारं च
हृतवान् ॥ ४१ ॥ अनन्तान्येवं वै तव विविधरूपाणि
च विभो प्रवक्तुं तानीह प्रभवति न कोऽप्यत्र जगति ॥
परात्मञ्छ्रीराम त्रिगुणरहिताकार परम प्रभापारावारा-
मितगुणनिधे चिद्घन विभो॥४२॥ नमस्ते श्रीरामानिय-
मितगुणग्राम सततं नमो भूयो भूयः पुनरपि नमस्ते
रघुपते॥ नमोवेदैर्वेद्याखिलमुनिगणाराध्य भगवन् नमो
भूयो भूयस्तव चरणपङ्केरुहयुगे ॥४३॥ मया ते पादा-
म्भोरुहयुगलमाश्रित्य नितरामयोध्यायां भक्त्या विवि-
धपदरम्यैः सुरचितम् ॥ इदं स्तोत्रं राम प्रपठति नरो यः
प्रतिदिनं स भुक्त्वा भोगान्वै व्रजति परमं शाश्वतपदम्
॥ ४४ ॥ सहस्रैः शेषौ वै प्रभवति न वक्रेगुणगणान्प्र-
वक्तुं चाकल्पं कथमपि च ते रामसततम्॥अतस्त्वां क-
स्तोतुं भवति कुशलःश्रीरघुपते व्रजन्त्याकाशस्य क्वचि-
दपि च पारं हि मशकाः ॥४५॥ तुभ्यं नमो भगवते
रघुनंदनाय श्रीजानकीप्रियतमाय खरान्तकाय। योगी
न्द्रपूजितपदाम्बुरुहद्वयाय संसारदुःखशमनाय नमो
नमस्ते ॥४६॥ कामाद्या दुर्जयाश्चेन्मम भवतु पुनर्मु-
क्तियोपित्सु कामःक्रोधश्चेत्पातके वै तव चरणयुगाम्भो-
रुहे स्याच्च लोभः ॥ मोहश्चेद्ध्यानयोगे मम भवतु

पुनर्मत्सरो मत्सरे वै त्वत्तोऽन्यत्सर्वसौख्यस्थितिमिह नितरानैव पश्यामि भूमौ ॥४७॥ इति श्रीमच्चतुर्भुजाचार्यचरणसरोजनिवसितमनश्चञ्चरीकास्वादित चिन्मकरन्दश्रीमद्विजयरामाचार्यविरचितं श्रीराममहिमस्तोत्रं सम्पूर्णम् ॥ ६८ ॥

## अथ विष्णुपञ्जरस्तोत्रम्

श्रीगणेशायनमः ॥ अथ विष्णुपञ्जरस्तोत्रप्रारम्भः ॥ ॐ अस्य श्रीविष्णुपञ्जरस्तोत्रमन्त्रस्य ॥ नारद ऋषिः ॥ अनुष्टुप् छंदः ॥ श्रीविष्णुः परमात्मा देवता ॥ अहं बीजम् ॥ सोहं शक्तिः ॥ ॐ ह्रीं कीलकम् ॥ मम सर्वदेहरक्षणार्थं जपे विनियोगः ॥ नारदऋषये नमः शिरसि ॥ अनुष्टुप्छन्दसेनमःमुखे ॥ श्रीविष्णुपरमात्मदेवतायै नमः हृदये ॥ अहं बीजं गुह्ये ॥ सोहं शक्तिः पादयोः ॥ ॐ ह्रीं कीलकं पादाग्रे ॥ ॐ ह्रां ह्रींह्रूंह्रैं ह्रौं ह्रः इति मन्त्र ॥ ॐ ह्रां अङ्गुष्ठाभ्यां नमः ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ ॐ ह्रूं मध्यमाभ्यां नमः ॥ ॐ ह्रैं अनामिकाभ्यां नमः ॥ ॐ ह्रौं कनिष्ठिकाभ्यां नमः ॥ ॐ ह्रः करतलकर पृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ ॐ ह्रां हृदयाय नमः ॥ ॐ ह्रीं शिरसे स्वाहा ॥ ॐ ह्रूं शिखायै वषट् ॥ ॐ ह्रैं कवचाय हुम् ॥ ॐ ह्रौं नेत्रत्रयाय वौषट् ॥ ॐ ह्रः अस्त्राय फट् ॥ इति अङ्गन्यासः ॥ अहं बीजं प्राणायामं मन्त्रत्रयेण कुर्यात्

अथ ध्यानम् ॥ परं परस्मात्प्रकृतेरनादिमेकं विनिष्ट बहुधा गुहायाम्॥सर्वालयं सर्वचराचरस्थं नमामि विष्णुं जगदेकनाथम् ॥ १ ॥ ॐ विष्णुपञ्जरकं दिव्यंसर्वदुष्ट-निवारणम् ॥ उग्रतेजो महावीर्यं सर्वशत्रुनिकृन्तनम् ॥ ॥२॥ त्रिपुरं दह्यमानस्य हरस्य ब्रह्मणोदितम् ॥ तदहं संप्रवक्ष्यामि आत्मरक्षाकरं नृणाम् ॥ ३ ॥ पादौ रक्षतु गोविन्दो जंघे चैव त्रिविक्रमः ॥ ऊरू मे केशवः पातु कटिं चैव जनार्दनः ॥४॥ नाभिं चैवाच्युतः पातु गुह्यं चैव तु वामनः ॥उदरं पद्मनाभश्च पृष्ठं चैव तु माधवः ॥५॥ वामपार्श्वे स्थितो विष्णुर्दक्षिणे मधुसूदनः बाह्वोर्वै वासुदेवश्च हृदि दामोदरस्तथा ॥ ६ ॥ कण्ठं रक्षतु वाराहः कृष्णश्च मुखमण्डलम्॥माधवः कर्णमूले तु हृषीकेशश्च नासिके ॥ ७ ॥ नेत्रे नारायणो रक्षेल्ललाटं गरुडध्वजः॥ कपोलौ केशवो रक्षेद्वैकुंठः सर्वतो दिशम्॥ ॥८॥ श्रीवत्सांकश्च सर्वेषामङ्गानां भव रक्षकः ॥ पूर्वस्यां पुण्डरीकाक्ष आग्नेय्यां श्रीधरस्तथा ॥९॥ दक्षिणे नरसिंहश्चनैऋत्यां माधवोऽवतु ॥ पुरुषोत्तमो मे वारुण्यां वायव्यां च जनार्दनः ॥१०॥ गदाधरस्तु कौबेर्य्यामीशान्यां पातु केशवः॥आकाशे च गदा पातु पाताले च सुदर्शनम् ॥११॥ सन्नद्धः सर्वगात्रेषु प्रविष्टो विष्णुपञ्जरः ॥ विष्णुपञ्जरविष्टोऽहं विचरामि महीतले ॥१२॥

राजद्वारे पथे घोरे संग्रामे शत्रुसंकटे॥ नदीषु चरणे चैव चोरव्याघ्रभयेषु च ॥१३॥ डाकिनीप्रेतभूतेषु भयं तस्य न जायते ॥ रक्ष रक्ष महादेव रक्ष रक्ष जनेश्वर ॥ १४ ॥ रक्षन्तु देवताः सर्वा ब्रह्मविष्णुमहेश्वराः ॥ जले रक्षतु वाराह स्थले रक्षतु माधवः ॥ १५ ॥ अटव्यां नारसिंहश्च सर्वतः पातु केशवः ॥ दिवा रक्षतु मां सूर्यो रात्रौ रक्षतु चन्द्रमाः ॥ १६ ॥ पन्थानं दुर्गमं रक्षेत् सर्वमेव जनार्दनः ॥ रोगविघ्नहतश्चैव ब्रह्महा गुरुतल्पगः ॥१७॥ स्त्रीहन्ताबालघाती च सुरापो वृषलीपतिः ॥ मुच्यते सर्वपापेभ्यो यः पठेन्नात्र संशयः ॥ १८ ॥ अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ॥ विद्यार्थी लभते विद्यां मोक्षार्थी लभते गतिम् ॥ १९ ॥ आपदो हरते नित्यं विष्णुस्तोत्रार्थसम्पदा ॥ यस्त्विदं पठते स्तोत्रं विष्णुपञ्जरमुत्तमम् ॥२०॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ गोसहस्रफलं तस्य वाजपेयशतानि च ॥२१॥ अश्वमेधसहस्रेण फलं प्राप्नोति मानवः ॥ सर्वकामं लभेदस्य पठनान्नात्र संशयः ॥ २२ ॥ जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ॥ ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥ २३ ॥ इति श्रीब्रह्माण्डपुराणे इन्द्रनारदसंवादे श्रीविष्णुपञ्जरस्तोत्रं सम्पूर्णम् ॥ ५९ ॥

# अथ वेंकटेशाष्टकप्रारम्भः

श्रीवेङ्कटेशपदपंकजधूलिपंक्तिः संसारसिन्धुतरणे तरणिर्नवीना॥ सर्वांघपुञ्जहरणाय च धूमकेतुः पायादनन्यशरणं स्वयमेव लोकम् ॥ १ ॥ शेषाद्रिगेह तव कीर्तितरङ्गपुञ्ज आभूमिनाकमभितः सकलान्पुनानः ॥ मत्कर्णयुग्मविवरेपरिगम्य सम्यक्कुर्यादशेषमनिशं खलु तापभङ्गम् ॥ २ ॥ वैकुण्ठराज सकलोऽपि धनेशवर्गो नीतोऽपमानसरणिं त्वयि विश्वसित्रा ॥ तस्मादयं न समयः परिहासवाचामिष्टं प्रपूर्य कुरु मां कृतकृत्यसंघम् ॥३॥ श्रीमन्नरास्तु कतिचिद्धनिकांश्च केचित्क्षोणीपतीन्कतिचिदत्र च राजलोकान्॥ आराधयन्तु मलशून्यमहं भवन्तं कल्याणलाभजननाय समर्थमेकम्॥४॥लक्ष्मीपतित्वमखिलेश तव प्रसिद्धमत्र प्रसिद्धमवनौ मदकिंचनत्वम्॥तस्योपयोगकरणाय मया त्वया च कार्यः समागम इदं मनसि स्थितं मे ॥५॥ शेषाद्रिनाथ भवताऽयमहं सनाथः सत्यं वदामि भगवंस्त्वमनाथ एव ॥ तस्मात्कुरुष्व मदभीप्सितकृत्यजालमेव त्वदीप्सिकृतौ तु भवान्समर्थः ॥ ६ ॥ क्रुद्धो यदा भवसि तत्क्षणमेव भूपो रंकायते त्वमसि चेत्खलु तोषयुक्तः ॥ भूपायतेऽथ निखिलश्रुतिवेद्य रंक इच्छाम्यतस्तव दयाजलवृष्टिपातम् ॥ ७ ॥ अङ्गीकृतं सुविरुदं भगवंस्त्वयेति मद्भक्त-

पोषणमहं सततं करोमि॥आविष्कुरुस्व मयि सत्सततं प्रदीने चिन्ताप्रहारमयमेवहि योग्यकालः ॥८॥ सर्वासु जातिषु मयातु समत्वमेव निश्चीयते तव विभो करुणाप्रवाहात्॥प्रह्लादपाण्डुसुतबल्लवगृध्रकादौनीचो न भाति मम कोऽप्यत एव हेतोः ॥९॥ संभावितास्तु परिभूतिमथ प्रयान्ति धूर्ता जयं हि कपटैकपरा जगत्याम् ॥ प्राप्ते तु वेंकटविभो परिणामकाले स्याद्वैपरीत्यमिव कौरवपाण्डवानाम् ॥१०॥ श्रीवेंकटेश तव पादसरोजयुग्मे संसारदुःखशमनाय समर्पयामि ॥ भास्वत्सदष्टकमिदं रचितं रसाक्तं प्राभाकरोऽहमनिशंविनयेन युक्तः ॥११॥ श्रीशालिवाहनशके शरकाष्टभूमि ( १८१५ ) संख्यामितेऽथ विजयाभिधवत्सरेऽयम् ॥ श्रीकेशवात्मज इदं व्यतनोत्समल्पं स्तोत्रं प्रभाकर इति प्रथिताभिधानः ॥१२॥इति गार्ग्यकुलोत्पन्न यशोदागर्भज-केशवात्मज-प्रभाकर–कृतिषुश्रीवेंकटेशाष्टकं स्तोत्रं समाप्तम् ॥६०॥

श्रीकृष्णदासतनुजस्य मया तु गङ्गाविष्णोरकारि किल सूचनयाष्टकं यत् ॥ तद्वेंकटेशमनसो मुदमातनोतु तद्भक्तलोकनिवहानन पंक्तिगं सत् ॥ १ ॥

पित्रोर्गुरोश्चाप्यपराधकारिणो भ्रातुस्तथाऽन्यायकृतश्च दुर्गताः ॥ तेषु त्वयाऽथापि कृपा विधीयतां सौहार्दवश्येन मया तु याच्यते ॥ २ ॥

# अथावतारबोधः

## रामनवम्यां-मेषे पुनर्वसौ

चैत्रमासे सिते पक्षे नवम्यां च पुनर्वसौ ॥ मध्याह्ने कर्कटे लग्ने जातो रामः स्वयं हरिः ॥ १ ॥

## कृष्णजयन्ती-सिंहे रोहिण्याम्

सिंहमासेऽसिते पक्षे रोहिण्यामष्टमीतिथौ ॥ चरमार्थप्रदातारं कृष्णं वन्दे जगद्गुरुम् ॥ २ ॥

## नृसिंहजयन्ती-वृषे स्वात्याम्

वृषभे स्वातिनक्षत्रे चतुर्दश्यां शुभे दिने ॥ सन्ध्याकालेऽनुजे शुक्ले स्तम्भोद्भूतो नृकेसरी ॥३॥ श्रीमन्नृसिंह विभवे गरुडध्वजाय तापत्रयोपशमनाय भवौषधाय ॥ तृष्णारिवृश्चिकजलाग्निभुजङ्गरोगक्लेशव्ययायहरये गुरवे नमस्ते ॥ ४ ॥

## श्रीरङ्गनाथाविर्भावः-कुम्भ रोहिण्याम्

तपस्ये मासि रौहिण्यां तटे सह्यभुवः स्थितम् ॥ श्रीरङ्गशायिनं वन्दे सेवितं सर्वदेशिकैः ॥५॥ श्रीस्तनाभरणं तेजः श्रीरङ्गेशयमाश्रये ॥ चिन्तामणिमिवोद्वान्तमुत्सङ्गेऽनन्तभोगिनः ॥ ६ ॥

---

१ ( कावेर्याः । )

## काञ्चीदेवराजाविर्भावः—मेषे हस्ते

चैत्रमासे सिते पक्षे चतुर्दश्यां तिथौ मुने ॥ शोभते हस्तनक्षत्रे रविवारसमन्विते ॥ ७ ॥ वपाहोमे प्रवृत्ते तु प्रातः सवनकालिके ॥ धातुरुत्तरवेद्यां तु प्रादुरासीज्जनार्दनः ॥ ८ ॥ वपापरिमलोल्लासलासिताधरपल्लवम् ॥ मुखं वरदराजस्यमुग्धस्मितमुपास्महे ॥ ९ ॥

## तिरुनारायणाविर्भावः—मीने हस्ते

सनत्कुमाररक्षार्थमागतं ब्रह्मणः पदात् ॥
यदुशैलस्थितं मीने हस्ते नारायणं भजे ॥ १० ॥

## श्रीवेङ्कटेशाविर्भावः—कन्यायां श्रवणे

कन्याश्रवणसञ्जातं श्रीशेषाचलवासिनम् ॥ सर्वेषां प्रथमाचार्यं श्रीनिवासमहं भजे ॥ ११ ॥ श्रीवेङ्कटाचलाधीशं श्रीयाध्यासितवक्षतम् ॥ श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥ १२ ॥

## लक्ष्म्याविर्भावः—मीने उत्तराफाल्गुन्याम्

फाल्गुनोत्तरफाल्गुन्यां सम्भूतां श्रियमाश्रये ॥ विष्णोर्दिव्यपदाम्भोजघटकां तत्पदाश्रिताम् ॥ १३ ॥ नमः श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः ॥ ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत् ॥ १४ ॥

## गोदाविर्भावः—कर्के पूर्वाफाल्गुन्याम्

कर्कटे पूर्वफाल्गुन्यां तुलसीकाननोद्भवाम् ॥ पाण्डचे विश्वम्भरं गोदां वन्दे श्रीरंगनायकीम् ॥ १५ ॥ नीला-तुङ्गस्तनगिरितटीसुप्तमुद्बोध्य कृष्णं पारार्थ्यं स्वयं श्रुतिशतशिरःसिद्धमध्यापयन्ती॥स्वोच्छिष्टायां स्रजि-निगलितं या बलात्कृत्य भुंक्ते गोदा तस्यै नम इद-मिदं भूय एवास्तु भूयः ॥ १६ ॥

## सरोयोगिस्वाम्याविर्भावः

तुलायां श्रवणे जातं कांच्यां काञ्चनवारिजात् ॥
द्वापरे पाञ्चजन्यांशं सरोयोगिनमाश्रये ॥ १७ ॥

## भूतयोग्याविर्भावः

तुलाधनिष्ठासंभूतं भूतं कल्लोलमालिनः ॥
तीरे फुल्लोत्पले मल्लयां पुर्यामीडे गदांशकम् ॥१८॥

## महदाह्वयाविर्भावः

तुलाशतभिषाजातं मयूरायुरकैरवात् ॥
महान्तं महदाख्यातं वन्दे श्रीनन्दकांशकम् ॥ १९ ॥

## योगिवाहनाविर्भावः

वृश्चिके रोहिणीजातं श्रीपाणं निचुलापुरे ॥
श्रीवत्सांशं गायकेन्द्रं मुनिवाहनमाश्रये ॥ २० ॥

## भक्तांघ्रिरेण्वाविर्भावः

कोदण्डज्येष्ठानक्षत्रे मण्डं गुडिपुरोद्भवम् ॥
चोलोर्व्यांवनमालांशं भक्तांघ्रिरेणुमाश्रये ॥२१॥

## श्रीभक्तिसाराविर्भावः

मघायां मकरे मासे चक्रांशं भार्गवोद्भवम् ॥
महीसारपुराधीशं भक्तिसारमहं भजे ॥ २२ ॥

## श्रीकुलशेखराविर्भावः

कुम्भे पुनर्वसौ जातं केरले चोलपट्टने ॥
कौस्तुभांशंधराधीशं कुलशेखरमाश्रये ॥ २३ ॥

## श्रीमधुरकव्याविर्भावः

मेषे चित्रसमुद्भूतं पांड्यदेशे गदांशकम् ॥
श्रीपराङ्कुशसद्भक्तं मधुरं कविमाश्रये ॥ २४ ॥

## शठकोपावतारः—वृषभे विशाखायाम्

वृषभे तु विशाखायां कुरुकापुरिकारिजम् ॥ पाण्ड्यदेशे कलेरादौ शठारिं सैन्यपं भजे ॥ २५ ॥ माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन यदन्वयानाम् ॥ आद्यस्य नः कुलपतेर्बकुलाभिरामं श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥ २६ ॥

## परकालावतारः—वृश्चिके कृत्तिकायाम्

वृश्चिके कृत्तिकाजातं चतुष्कविशिखामणिम्[1] ॥ षट्प्रबन्धकृतं शार्ङ्गमूर्तिं कलिहमाश्रये ॥ २७ ॥ कलयामि कलिध्वंसं विकलोकदिवाकरम् ॥ यस्य गोभिः प्रकाशाभिरांविद्यं[2] निहतं तमः ॥ २८ ॥

## रामानुजाचार्यावतारः—मेषे आर्द्रायाम्

आर्द्रामेषभवं विष्णोर्दर्शनस्थापनोत्सुकम् ॥ तुण्डीरमण्डले शेषमूर्तिं रामानुजं भजे ॥२९॥ यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने ॥ अस्मद्गुरोर्भगवतोऽस्यदयैकसिन्धो रामानुजस्य चरणौ शरणं प्रपद्ये ॥ ३० ॥

## दाशरथ्यवतारः—मेषे पुनर्वसौ

मेषे पुनर्वसुदिने पाञ्चजन्यांशसंभवम् ॥ यतीन्द्रपादुकाभिख्यं वन्दे दाशरथिं गुरुम् ॥ ३१ ॥ पादुके यतिराजस्य कथयन्ति यदाख्यया ॥ तस्य दाशरथेः पादौ शिरसा धारयाम्यहम् ॥ ३२ ॥

## कूरेशावतारः—मकरे हस्ते

मकरे हस्तनक्षत्रे सर्पनेत्रांशसंभवम् ॥ श्रीमत्कूरकुलाधीशं श्रीवत्सांकमहं भजे ॥३३॥ श्रीवत्सचिह्नमि-

---

१ चत्वारः कवयः तेषां शिखामणिम्। २ अविद्याया भवम्।

श्रेभ्यो नम उक्तिमधीमहि ॥ यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥ ३४ ॥

## रम्यजामातृमुन्यवतारः—तुलायां मूले

तुलायामतुले मूले पाण्ड्ये कुन्तीपुरे वरे ॥ श्रीशेषांशोद्भवं वन्दे रम्यजामातरं मुनिम् ॥ ३५ ॥ श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ॥ यन्तीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥३६॥ इति प्रोक्ता समासेन विष्णोर्भक्तजनस्य च ॥ आविर्भावावतारेषु पठनीया गुणावली ॥ ३७ ॥ इति अवतारबोधः समाप्तः ॥

---

१ विस्तरेण तु स्वस्वगुरुसकाशादधिगन्तव्या । ग्रन्थविस्तरभयान्नात्र लिखिता । अधिकमासे प्राप्ते तु सिंहसंक्रमे भाद्रपदेऽपि यदि जन्माष्टमी भवेत्तदा तावत्पर्यन्तं दोलोत्साहं कुर्वीतेति केषांचिन्मतम् ।

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान


**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१
दूरभाष - ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१
दूरभाष - ०५४२-२४२००७८.


KHEMRAJ SHRIKRISHNADASS

